''यतो वा'' इत्यादिश्रुत्यनुसारादिति, तन्न, ''यतो वा'' इत्यत्र चतुर्णां, ''तमेवैकं जानथ'' इत्यादौ ''यस्मिन् द्यौः'' इति स्थित्यादीनामेकैकस्यैव श्रवणात् । न च 'अभिसंविशन्ति' इत्येतदपि प्रलयपरम्, 'प्रयन्ति' इत्यनेन पौनरुक्त्यापत्त्या तस्य मोक्षपरत्वात् । न च 'प्रयन्ति' इत्यनेन सुषुप्तौ ब्रह्मप्राप्तिरुच्यते, तथाऽपि चतुष्ट्वापरिहारात् । जगतो जन्माङ्गीकारेऽनित्यत्वापत्त्या मिथ्यात्वासिद्धेरुक्तत्वाच्च । तस्मात्सृष्ट्याद्यष्टकमेव जन्मादिपदार्थः । ''यतो वा'' इत्यत्र सृष्टिस्थिति-प्रलयमोक्षाणाम्, ''य आत्मानमन्तरो यमयति'' ''त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो'' इत्यादौ नियमनादीनामप्युक्तेः । सूत्रकृतैव स्कान्देऽष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्च । न च नियत्यादीनां जन्मादावन्तर्भावः । स्वस्वव्यापारेषु प्रवृत्त्यादिरूपाणां नियत्यादीनां विनाशादेरिव जन्मादिमत्त्वेऽपि जन्मादिभ्यो भेदानुभवात् । मोक्षस्य बन्धध्वंसत्वे चोत्पत्तिरपि प्रागभावनिवृत्तिः स्यात् । ननूत्पत्तिः प्रागभावस्य ध्वंसो न तूत्पद्यमानस्येति चेत्तर्हि मोक्षोऽपि बन्धस्य ध्वंसो न तु बद्धस्य । मोक्षस्य परमपुरुषार्थतया पृथग्वाच्यत्वाच्च ।'

(१) पञ्चमं वर्णकम्

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किं लक्षणं पुनस्तद् ब्रह्मेति? अत आह भगवान् सूत्रकारः – जन्माद्यस्य यतः ।।२।।

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते' इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । ''अस्ये''ति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः । षष्ठी जन्मादिधर्मसंबंधार्था । यत इति कारणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः । अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु ''जायतेऽस्ति'' इत्यादिनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशंक्येत, तन्मा शंकि इति योत्पत्तिर्ब्रह्मणः (कारणात्) तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधाना-

दचेतनादणुभ्योऽभावाद्वा संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम् । नच स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादि-साधनं मन्यन्ते ईश्वरकारणिनः ॥

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे, न; वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मा-वगतिर्नानुमानादिप्रमाणान्तरनिवृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु, तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्यविरोधि प्रमाणं भवन्न निवार्यते, श्रुत्यैव च आत्मनः सहायत्वेन तर्कस्याप्यभ्युपेतत्वात् । तथाहि – 'श्रोतव्यो मन्तव्यः' इति श्रुतिः 'पण्डितो मेधावी गान्धारानेवोपसंपद्येतैवमेवेहाचार्यवान् पुरुषो वेद' इति च पुरुष-बुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्, किन्तु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं, अनुभवावसानत्वा द्भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षाऽस्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथा- अश्वेन गच्छति, पद्भ्यामन्यथा वा न वा गच्छतीति । तथा ''अतिरात्रे षोडशिनं गृह्णाति, नाति रात्रे षोडशिनं गृह्णाति', ''उदिते जुहोति, अनुदिते जुहोति'' इति । विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः, विकल्पोत्सर्गाप-वादाश्च । न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते, विकल्पनास्तु पुरुषबुद्ध्य-पेक्षाः । न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् । किं तर्हि वस्तुतन्त्रमेव तत् । नहि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात् । ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वेमेवेति वेदान्तवाक्यविचारणाऽनर्थिकैव प्राप्ता, न; इन्द्रियाद्यविषयत्वेन संबंधाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्म-विषयाणि । सति हिन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धं – इति न शक्यं निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं, किं तर्हि? वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह – 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्-ब्रह्मेति ।' तस्य च निर्णयवाक्यं – 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ।

ಅನುವಾದ - ಅದ್ವೈತಿಗಳು ಸೂತ್ರಾರ್ಥವನ್ನು ಹೀಗೆ ಹೇಳುತ್ತಾರೆ - 'ಜನ್ಮಾದಿ' ಶಬ್ದದಿಂದ ಉತ್ಪತ್ತಿ ಸ್ಥಿತಿ, ಹಾಗು ಸಂಹಾರಗಳನ್ನಷ್ಟೇ ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ನಿಯಮನಾದಿಗಳನ್ನು ತೆಗೆದುಕೊಳ್ಳಬಾರದು. 'ಯತೋ ವಾ ಇಮಾನಿ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯಲ್ಲಿ ಮೂರನ್ನೇ ಹೇಳಿರುವುದರಿಂದ ಇಲ್ಲಿಯೂ ಮೂರನ್ನೇ ತೆಗೆದುಕೊಳ್ಳಬೇಕು.

ಈ ವ್ಯಾಖ್ಯಾನವು ತಪ್ಪು. 'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯಲ್ಲಿ ಮೂರನ್ನು ಹೇಳಿಯೇ ಇಲ್ಲ ಮೋಕ್ಷವನ್ನೂ ಸೇರಿಸಿಕೊಂಡು ನಾಲ್ಕನ್ನು ಹೇಳಿದ್ದಾರೆ. ಇನ್ನು ಬೇರೆ ಶ್ರುತಿಗಳಲ್ಲಿಯೂ ಒಂದೊಂದನ್ನೇ ಹೇಳಿದ್ದಾರೆ. 'ತಮೇವೈಕಂ ಜಾನಥ' ಎಂಬಲ್ಲಿ ಕೇವಲ ಜ್ಞಾನವನ್ನು 'ಯಸ್ಮಿನ್ ದ್ಯೌಃ' ಎಂಬಲ್ಲಿ ಕೇವಲ ಸ್ಥಿತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ. 'ಯತೋ ವಾ' ಎಂಬಲ್ಲಿರುವ 'ಅಭಿಸಂವಿಶಂತಿ' ಪದವು ಮೋಕ್ಷವನ್ನು ಹೇಳುತ್ತಿಲ್ಲ. ಪ್ರಲಯವನ್ನು ಹೇಳುತ್ತಿದೆಯೆಂದು ಆಕ್ಷೇಪಿಸಬಾರದು. ಹಾಗಾದಲ್ಲಿ 'ಪ್ರಯಂತಿ' ಎಂಬುದರಿಂದ ಪುನರುಕ್ತವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಮೋಕ್ಷಪರವಾಗಿಯೇ ಅರ್ಥೈಸಬೇಕು. 'ಪ್ರಯಂತಿ' ಎಂಬುದರಿಂದ ಪ್ರಲಯವನ್ನು ಹೇಳಿಲ್ಲ. ಸುಷುಪ್ತ್ಯವಸ್ಥೆಯಲ್ಲಿ ಆಗುವ ಬ್ರಹ್ಮಪ್ರಾಪ್ತಿಯನ್ನಷ್ಟೇ ಹೇಳಿದ್ದಾರೆಂದು ಹೇಳಬಾರದು, ಹಾಗೆ ಹೇಳಿದರೂ ನಾಲ್ಕನ್ನು ಹೇಳಿದಂತೆಯೇ ಆಗುತ್ತದೆ. ಮತ್ತು ಜಗತ್ತಿಗೆ ನೀವು ಜನ್ಮವನ್ನಂಗೀಕರಿಸಿದರೆ ಜಗತ್ತನ್ನು ಅನಿತ್ಯವೆಂದಂತಾಯಿತು. ಹಾಗಾದಲ್ಲಿ ಮಿಥ್ಯಾತ್ವವು ಸಿದ್ಧಿಸಲಾರದೆಂದು ಜಿಜ್ಞಾಸಾಧಿಕರಣದಲ್ಲಿ ಹೇಳಿದ್ದೇವೆ. ಆದ್ದರಿಂದ 'ಜನ್ಮಾದಿ' ಎಂಬ ಪದದಿಂದ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳನ್ನೂ ಇಟ್ಟುಕೊಳ್ಳಬೇಕು.

'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯಲ್ಲಿ ಸೃಷ್ಟಿ, ಸ್ಥಿತಿ, ಪ್ರಲಯ, ಮೋಕ್ಷಗಳನ್ನು ಹೇಳಿದ್ದಾರೆ. ಮತ್ತು 'ಯ ಆತ್ಮಾನಮಂತರೋ ಯಮಯತಿ ತ್ವಂ ಮುಕ್ತಿದೋ ಬಂಧದೋಽತೋ ಮತೋ ನಸ್ತ್ವಂ ಜ್ಞಾನದೋಽಜ್ಞಾನಶ್ಚಾಸಿ ವಿಷ್ಣೋ' ಎಲೈ ವಿಷ್ಣುವೇ! ಯಾವ ಕಾರಣದಿಂದ ನೀನು ಒಳಗಡೆ ನಿಂತು ಜೀವರನ್ನು ಜೀವಾಭಿಮಾನಿ ಚತುರ್ಮುಖನನ್ನು ಪ್ರೇರಿಸುತ್ತಿ, ಮೋಕ್ಷವನ್ನು ಕೊಡುತ್ತಿ, ಬಂಧನವನ್ನು ಕೊಡುತ್ತಿ, ಜ್ಞಾನ ಹಾಗು ಅಜ್ಞಾನಗಳನ್ನೂ ಕೊಡುತ್ತಿ ಆ ಕಾರಣದಿಂದ ನಮ್ಮಿಂದ ವಿಚಾರ ಮಾಡಲ್ಪಡುವವನಾಗಿದ್ದಿ' ಎಂಬ ಶ್ರುತಿಯು ನಿಯಮನಾದಿಗಳನ್ನು ಹೇಳುತ್ತಿದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೇ ಸೂತ್ರಕಾರರು ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಅಷ್ಟಕರ್ತೃತ್ವವನ್ನು ಬ್ರಹ್ಮನ ಲಕ್ಷಣವೆಂದು ಸ್ವತಃ ಹೇಳಿದ್ದಾರೆ. ನಿಯಮನಾದಿಗಳು ಜನ್ಮಾದಿಗಳಲ್ಲೇ ಅಂತರ್ಭಾವ ಹೊಂದುತ್ತವೆಂದು ಹೇಳಬಾರದು. ತಮ್ಮ ತಮ್ಮ ವ್ಯಾಪಾರಗಳಲ್ಲಿ ಪ್ರವೃತ್ತ್ಯಾದಿರೂಪವಾದ ನಿಯಮನಾದಿಗಳನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಅಂಗೀಕರಿಸಲೇಬೇಕು. ಯಾವ ರೀತಿಯಾಗಿ ವಿನಾಶಕ್ಕೆ ಜನ್ಮವಿದ್ದರೂ ಜನ್ಮದಲ್ಲಿ ಸೇರದೇ ಪ್ರತ್ಯೇಕವಾಗಿದೆಯೆಂದು

---

आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति' अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ।। इति द्वितीयं जन्माद्यधिकरणम् ।। इति पञ्चमं वर्णकम् ।

ಅನುಭವವಿದೆಯೋ ಹಾಗೆಯೇ ನಿಯಮನಾದಿಗಳಿಗೆ ಜನ್ಮವಿದ್ದರೂ ಸಹ ಜನ್ಮದಲ್ಲಿ ಸೇರದೆ ಪ್ರತ್ಯೇಕವಾಗಿ ಇರುವುದು ಅನುಭವಸಿದ್ಧವಾಗಿದೆ.

ಇನ್ನು ಮೋಕ್ಷವನ್ನು ಬಂಧಧ್ವಂಸರೂಪವೆಂದು ಹೇಳಿದರೆ ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವನಿವೃತ್ತಿರೂಪವ ಾಗಬೇಕಾದೀತು. ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವದ ಧ್ವಂಸವಾಗಿದೆ ಹೊರತು ಹುಟ್ಟುವ ವಸ್ತುವಿನ ಧ್ವಂಸರೂಪವಾಗಿಲ್ಲವೆಂದು ಆಕ್ಷೇಪಿಸಬಾರದು, ಹಾಗಾದರೆ ಮೋಕ್ಷವೂ ಸಹ ಬಂಧದ ಧ್ವಂಸವೆಂದೇ ಹೊರತು ಬದ್ಧನಾದ ವ್ಯಕ್ತಿಯ ಧ್ವಂಸವೆಂದಲ್ಲ. ಮತ್ತು ಮೋಕ್ಷವು ಪರಮಪುರುಷಾರ್ಥವಾದ್ದರಿಂದ ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳಲೇಬೇಕು.

**प्रकाशः –** पराभिमतं सूत्रार्थमपि निरस्यति **– यच्चोक्तमिति** । 'श्रुत्यनुसारात्' इति तात्पर्यानुवादः । उक्तं च तद्भाष्ये – ''जन्मस्थितिभङ्गं समासार्थः'' इति । '' 'यतो वा' इत्यादिवाक्ये जन्मस्थितिपलयानां क्रमदर्शनात्'' इति च । **चतुर्णामिति** । ''अभिसंविशन्ति'' इत्यनेन मोक्षोक्तेरिति भावः । **तमेवेति** ।। तस्याप्यत्र विषयत्वादुदाहृतम् । 'तथाऽपि' इत्यभ्युपगमवादः । यदपि तद्गुण-संविज्ञानबहुव्रीहिमाश्रित्य जगतो जन्माङ्गीकरणं, तदपि व्याहतमित्याह – **जगत** इति । तथा च स्थितिभङ्गावेवोपेयाविति भावः । **उक्तत्वाच्चेति** । जिज्ञासाधिकरणे विवरणाभिमतनित्यानित्यवस्तुविवेकखण्डनग्रन्थे इति भावः । 'तस्मात्' श्रुत्यनु-सारादित्यर्थः । एतेन केषांचित्पक्षोऽपि निरस्तः । यथोक्तं श्रीभाष्ये – ''जन्मादीति सृष्टिस्थितिपलयम्'' इति । एतेनैव आद्यस्य चतुर्मुखस्य जन्म यतः' इति मतं, 'आदिपदेन स्थितिमात्रं गृह्यते' इति मतं च निरस्तम्, सर्वस्य श्रुत्यननुसारात् । एतेन – ''अन्ये तु – 'जन्मादि' इति तद्गुणसंविज्ञानबहुव्रीहिमुपादाय सृष्टिस्थिति-भङ्गं समासार्थ इति व्याकुर्वते'' इत्यादिसुधावाक्यं विवृतं भवति । तत्रानुदाहृतत्वात्ता एव श्रुतीराह – **यतो वा इत्यादिना । य आत्मानमिति** । 'आत्मानं' जीवं तदभिमानिचतुर्मुखं वेत्यर्थः ।

नन्वत्र विचारविधेरश्रवणान्नेदं विषयवाक्यम् । तद्विधिवाक्यस्थलक्षणानामेवेह सूत्रे सङ्ग्रहात् । उक्तं च सुधायां – ''न चैकमेव सर्वत्र जिज्ञासाविधायकश्रुतिषु लक्षणं श्रूयते, किन्त्वासु ब्रह्मजिज्ञासाविधात्रीषु श्रुतिषु क्वचित् सृष्टिः, क्वचित् स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्त्युपयोगः'' इति ।।

अत्रापि चाग्रे ''विचारविधायकनानावाक्य'' इत्यादि वक्ष्यति । तथा च कथमेतदुदाहरणम् । उच्यते । लक्षणसूत्रे श्रुतिवाक्यप्रसिद्धलक्षणस्य सङ्ग्रहो न विधिवाक्यस्थस्येति निर्बन्धः । अत एव तत्त्वप्रदीपे ''...'विवेश भूतानि चराचराणि' इत्यर्थान्नियमनं'' इत्यादिना तादृशवाक्यान्येवोदाहृतानि । उदाहृतसुधावाक्यादिकं तु सम्भाविताभिप्रायं । यद्वा – अन्तर्यामिब्राह्मणोपक्रमे ''यो वै तत्काप्यसूत्रं विद्यात् तं चान्तर्यामिणमिति ब्रह्मवित्स लोकवित्'' इत्य र्थवादात् जिज्ञासाविधेरुन्नयनाद् विचारविधिवाक्यमेवैतदिति न दोषः । **त्वमिति** । यतो बन्धादिदाता, अतो नोऽस्माकं 'मतः' विचारित इत्ययमप्यत्र विषय इति भावः । इयं च श्रुतिगीतातात्पर्योदाहृतश्रुतिरिति ध्येयम् । **स्कान्द इति** । ''उत्पत्तिस्थितिसंहाराः'' इति स्मृत्येति भावः । ननु ''अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भावः'' इति परभाष्ये अन्तर्भावोक्तेर्नियत्यादीनां जन्मस्थितिभङ्गोपेतत्वेन तेनैव गृहीतेर्न पृथग्वाच्यतेत्याशङ्क्याह – **न चेति** । नियतिस्वरूपोक्तिः ''स्वस्वव्यापारेषु प्रवृत्ति'' इति । ज्ञानाज्ञाने तु व्यक्ते । सुखदुःखानुभवो बन्धः, नित्यानन्दानुभवो मोक्ष इति ध्येयम् । यथा विनाशस्य जन्मस्थितिमत्त्वेऽपि ताभ्यां भङ्गस्य पार्थक्यं, यथा वा स्थितेर्जन्मभङ्गवत्त्वेऽपि ताभ्यां पार्थक्यं, तथा नियत्यादीनां तत् त्रितयवत्त्वेऽपि तेभ्योऽपि भेदानुभवादित्यर्थः । मोक्षस्य भङ्गाभेदमाशङ्क्याह – **मोक्षस्येति** । तथा च भङ्गेनैवोत्पत्तेरपि ग्रहणं स्यादिति भावः । **उत्पद्यमानस्येति** । तथा च तद्ध्वंसो भङ्गपदार्थोऽन्यो वाच्य इति भावः । **बद्धस्येति** । बद्धस्य विशिष्टस्य पदार्थान्तरत्वेन तद्ध्वंसोऽप्यतिरिक्तो नाशपदार्थ इति वा, बद्धपदं धर्मिसामान्यपरं, तद्ध्वंसो नाशपदार्थोऽन्यो वाच्य इति वाऽभिप्रायः । भावरूपोप्यावश्यक इत्याह – **मोक्षस्येति** । अनिष्टनिवृत्तेः पुमर्थत्वेऽपीष्टप्राप्तेरेव मुख्यपुरुषार्थत्वमिति भावः ।

**गुरुराजीय** – यतो वेत्यादिश्रुत्यनुसाराद्वा त्रितयमुच्यते श्रुत्यन्तरानुसाराद् वा । नाद्य इत्याह । **यतो वेत्यत्रेति** । द्वितीयं दूषयति । **तमेवैकमिति** । अत्र अमृतस्यैष सेतुरिति मुक्तप्राप्यत्वस्योक्तावप्युत्तरवाक्योक्तत्वेन विषयवाक्येऽनुक्तत्वात् तदभिप्रायेणैकैकस्येत्युक्तिरिति ज्ञेयम् । **जगतो जन्माङ्गीकार इति** । यद्यपि जगतो जन्माङ्गीकारमात्रेण मिथ्यात्वासिद्धिः शक्योपपादना । ध्वंसप्रतियोगित्ववत् प्राग-

भावप्रतियोगित्वस्याप्यत्यन्ताभावप्रतियोगित्वविरोधित्वात् । तथाऽपि पूर्वं सविस्तरमुपपादितत्वेन तत्स्मारणार्थं भङ्गाङ्गीकारे मिथ्यात्वासिद्धेर्वक्तव्यत्वात् भङ्गमात्रोपादाने च प्रथमातिक्रमे कारणाभावात् जन्मस्थित्यङ्गीकारे तद् दूषणाभावप्रतीतेः स्थितिमात्रोपादाने च पूर्वोक्तस्मरणायोगात्त्रितयोपादानेपि साक्षात् तदप्रतीतेरेकैकस्यैव मिथ्यात्वप्रतिकूलताभावप्रतीतेश्च भङ्गशब्देन चरमान्तःकरणवृत्त्या प्रपञ्चनिवृत्तिरविवक्षितेति शङ्कास्पदत्वाच्च साक्षाद् भङ्गमनुक्त्वा जन्माङ्गीकारेणानित्यत्वापादनमिति ज्ञेयम् । ननु यतो वेत्यादि श्रुत्युक्तत्वात् चतुष्टयमेवास्तु न त्वन्यत् । तत्र प्रमाणाभावादित्यत आह – **यतो वेत्यत्रेति** । अष्टकस्य प्रामाणिकत्वेपि सूत्रकारेणाष्टकं विवक्षितमित्यत्र सूत्रकारीयं ज्ञापकमाह – **सूत्रकृतैवेति** । नन्वेकस्यापरत्रान्तर्भावेनाष्टककर्तृत्वमेव न सम्भवतीत्याशङ्क्य निराकरोति । **न चेति** । जन्मपदार्थनियतिपदार्थयोरैक्यात् जन्मनो न पृथक्करणं नियतेरित्युच्यते उत नियतेरपि जन्मसद्भावाज्जन्मग्रहणेनैव तस्या अपि प्राप्तत्वादिति वा, नाद्यः । स्वस्वव्यापारेषु प्रवृत्त्यादिरूपत्वे पदार्थैक्याभावात् । न द्वितीयः । नियत्यादेर्जन्मादिमत्त्वेपि विनाशवद्भेदस्यानुभूयमानत्वादित्याह – **स्वस्व-व्यापारेष्विति** । विनाशादेरित्यनेनान्यथा प्रागभावध्वंसरूपोत्पत्तेर्ध्वंसोत्पत्तिरूप-विनाशस्य वा पृथग्ग्रहणं न स्यादिति सूचयति । यद्वा तर्ह्युत्पत्तिकारणत्वे उक्ते ध्वंसस्याप्युत्पत्तिमत्त्वेन ध्वंसकारणत्वस्यापि लब्धत्वेन तस्याऽपि पृथगवक्तव्यतया त्रितयकर्तृत्वं त्वत्पक्षेऽप्यनुपपन्नम् । न च तत्रावान्तरविशेषेण पृथगुक्तिः । तर्हि प्रकृतेपि समानमिति भावेन प्रतिबंद्या समाधत्ते । **स्वस्वेति** । ननु संहारकारणत्वे मोक्षकारणत्वमेव लब्धम् । मोक्षस्य बन्धध्वंसरूपत्वात् । तथा च पृथक् तदभिधानमयुक्तमित्याशंक्य तर्हि ध्वंसकारणत्वेऽभिहिते उत्पत्तेरपि प्रागभाव-निवृत्तिरूपत्वेन ध्वंसत्वेनोत्पत्तिकारणत्वस्यापि लब्धत्वेन त्रितयकारणत्वमपि न स्यादित्याह – **मोक्षस्येति** । उत्पद्यमानस्य उत्पत्तिविषयप्रागभावान्मुच्यमानस्य । प्रागभावप्रतियोगिन इति यावत् । न तु बद्धस्य बन्धान्मुच्यमानस्य । बन्धनिरूपकस्येति यावत् । एवं प्रतिबन्द्या मोक्षकर्तृत्वमप्यवश्यं पृथग्वाच्यमित्युपपाद्य प्रतिबन्द्यामुत्तरत्वं मन्यमानं प्रति पृथङ् मोक्षकारणत्वाभिधाने वास्तवं प्रकारमाह – **मोक्षस्येति । परमेति** । जिज्ञासाहेतुत्वादित्यर्थः ।

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ವಿವರಣೆ - ಪರರ ಅಧಿಕರಣರಚನೆಯನ್ನು ನಿರಾಕರಿಸಿದ್ದಾಯಿತು. ಈಗ ಅದ್ವೈತಿಗಳು ಹೇಳುವ ಸೂತ್ರಾರ್ಥವನ್ನು ಖಂಡಿಸುತ್ತಿದ್ದಾರೆ. ''ಜನ್ಮಸ್ಥಿತಿಭಂಗಂ ಸಮಾಸಾರ್ಥಃ'' ಸೂತ್ರದಲ್ಲಿರುವ 'ಜನ್ಮಾದಿ' ಪದವು ಜನ್ಮ, ಸ್ಥಿತಿ, ಸಂಹಾರಗಳ ಸಮುದಾಯವನ್ನೇ ಅರ್ಥವಾಗಿ ಉಳ್ಳದ್ದು. ಏಕೆಂದರೆ 'ಯತೋವೇತ್ಯಾದಿವಾಕ್ಯೇ ಜನ್ಮಸ್ಥಿತಿ ಪ್ರಲಯಾನಾಮ್ ಕ್ರಮದರ್ಶನಾತ್' ಯತೋ ವಾ ಇತ್ಯಾದಿ ವಾಕ್ಯದಲ್ಲಿ ಜನ್ಮಾದಿಗಳು ಮೂರೇ ಕೇಳಿಬರುತ್ತಿರುವುದರಿಂದ ಸೂತ್ರದಲ್ಲಿರುವ 'ಜನ್ಮಾದಿ' ಎಂಬ ಶಬ್ದವು ನಪುಂಸಕಲಿಂಗದಲ್ಲಿದೆ. ಅದನ್ನು ಉಪಪಾದನೆ ಮಾಡುವ ಉದ್ದೇಶದಿಂದ ಸಮಾಹಾರವನ್ನು ಚಂದ್ರಿಕೆಯಲ್ಲಿ 'ಉತ್ಪತ್ತಿಸ್ಥಿತಿಭಂಗಂ' ಎಂದು ಹೇಳುತ್ತಿದ್ದಾರೆ.

'ಸಾಮಾನ್ಯೇ ನಪುಂಸಕಮ್' ಎಂಬ ಸೂತ್ರದಂತೆ ಸಾಮಾನ್ಯವು ವಿವಕ್ಷಿತವಾದಾಗ ನಪುಂಸಕಲಿಂಗ ಬರುತ್ತದೆ. ಇಲ್ಲಿ ಸೂತ್ರಕಾರರು ಏಕವಚನವನ್ನು ನಪುಂಸಕಲಿಂಗವನ್ನೂ ಪ್ರಯೋಗ ಮಾಡಿದ್ದರಿಂದ ಸಮಾಹಾರವು ಸೂತ್ರಕಾರರಿಗೆ ಅಭಿಪ್ರೇತವಾಗಿದೆಯೆಂದು ತಿಳಿಯುತ್ತದೆ. ಇಲ್ಲವಾದರೆ 'ಜನ್ಮ ಆದಿಃ ಯಯೋಃ' (ಯಾವ ಸ್ಥಿತಿ ಹಾಗು ಭಂಗಗಳು ಜನ್ಮವೇ ಆದಿಯಾಗಿ ಉಳ್ಳವುಗಳಾಗಿವೋ) ಅನ್ಯಪದಾರ್ಥಪ್ರಧಾನಬಹುವ್ರೀಹಿಯನ್ನು ಆಶ್ರಯಿಸಿದಂತಾದ್ದರಿಂದ 'ಜನ್ಮಾದೀ' ಎಂದು ದ್ವಿವಚನ ಬರಬೇಕಾಗಿತ್ತು. ಈಕಾರಾಂತವಾದಲ್ಲಿ 'ಯಣ್' ಬರದೇ 'ಈದೂದೇದ್‌ದ್ವಿವಚನಂ ಪ್ರಗೃಹ್ಯಮ್' ಎಂಬ ಸೂತ್ರದಿಂದ ಪ್ರಗೃಹ್ಯಸಂಜ್ಞೆ ಬಂದು ಪ್ರಕೃತಿಭಾವ ಬಂದರೆ 'ಜನ್ಮಾದೀ ಅಸ್ಯ' ಎಂದೇ ಸೂತ್ರದ ನಿರ್ದೇಶವಿರಬೇಕಿತ್ತು. ಹೀಗೆ ಮಾಡಿದರೆ ಗೌರವ ಬರುತ್ತದೆ. ಹಾಗಾಗಿ ಇಲ್ಲಿ ವಿಶೇಷವನ್ನು ವಿವಕ್ಷೆ ಮಾಡದೆ ಸಾಮಾನ್ಯವನ್ನು ವಿವಕ್ಷೆ ಮಾಡಿ ನಪುಂಸಕಲಿಂಗವನ್ನೂ ಏಕವಚನವನ್ನೂ ಹೇಳಿದ್ದು ಅರ್ಥಪೂರ್ಣವಾಗಿದೆ.

ಸೃಷ್ಟಿ ಸ್ಥಿತಿ ಲಯಗಳನ್ನಷ್ಟೇ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆಂದು 'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯ ಬಲದಿಂದ ಹೇಳುತ್ತೀರೋ? ಅಥವಾ ಬೇರೆ ಶ್ರುತಿಯ ಬಲದಿಂದ ಹೇಳುತ್ತೀರೋ? 'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯ ಬಲದಿಂದ ಹೇಳಲು ಬರುವುದಿಲ್ಲ. 'ಯತೋ ವಾ ಇಮಾನಿ ಜಾಯಂತೇ ಯೇನ ಜಾತಾನಿ ಜೀವಂತಿ ಯತ್ಪ್ರಯಂತ್ಯಭಿಸಂವಿಶಂತಿ' ಎಂಬುದಾಗಿ 'ಜಾಯಂತೇ' ಎಂದು ಸೃಷ್ಟಿಯನ್ನು 'ಜೀವಂತಿ' ಎಂದು ಸ್ಥಿತಿಯನ್ನು 'ಪ್ರಯಂತಿ' ಎಂದು ಲಯವನ್ನು 'ಅಭಿಸಂವಿಶಂತಿ' ಎಂದು ಮೋಕ್ಷವನ್ನು ಹೀಗೆ 'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯು ಸೃಷ್ಟಿ ಸ್ಥಿತಿ, ಲಯ, ಮೋಕ್ಷಗಳನ್ನು ಹೇಳಿರಬೇಕಾದರೆ ಈ ಶ್ರುತಿಯ ಬಲದಿಂದ ನಿಮಗೆ ಮೂರನ್ನು ಮಾತ್ರ ಉಪಪಾದನೆ ಮಾಡಲು ಆಗುವುದಿಲ್ಲ.

ಮತ್ತು 'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ಶ್ರುತಿಯು ಹೇಗೆ ವಿಷಯವಾಕ್ಯವೋ ಹಾಗೆಯೇ 'ತಮೇವೈಕಂ ಜಾನಥ' ಇತ್ಯಾದಿಶ್ರುತಿಯು ವಿಷಯವಾಕ್ಯವಾಗಿದೆ. ಈ ಶ್ರುತಿಯಲ್ಲಿ ಕೇವಲ ಜ್ಞಾನ ಒಂದನ್ನೇ ಹೇಳಿದ್ದಾರೆ. ಹಾಗಾದರೆ ಜ್ಞಾನಮಾತ್ರಕಾರಣತ್ವವನ್ನು ಬ್ರಹ್ಮನಿಗೆ ಹೇಳಬೇಕಾದೀತು. ವಾಸ್ತವಿಕವಾಗಿ ಈ ಶ್ರುತಿಯಲ್ಲೇ ಮುಂದೆ 'ಅಮೃತಸ್ಯೈಷ ಸೇತುಃ' ಎಂದು ಮುಕ್ತಪ್ರಾಪ್ಯತ್ವವನ್ನೂ ಹೇಳಿದ್ದಾರೆ. ಆದರೆ ಇದು ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಸೇರದ ಕಾರಣ ಒಂದನ್ನೇ ವಿವಕ್ಷಿಸಬೇಕು. ಹಾಗೆಯೇ 'ಯಸ್ಮಿನ್ ದ್ಯೌಃ' ಎಂಬ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಕೇವಲ ಸ್ಥಿತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ.

'ಯತೋ ವಾ' ಇತ್ಯಾದಿ ವಿಷಯವಾಕ್ಯದಲ್ಲಿರುವ 'ಅಭಿಸಂವಿಶಂತಿ' ಶಬ್ದಕ್ಕೆ ನೀವು ಪ್ರಲಯವೆಂದು ಅರ್ಥಮಾಡಿದರೆ ಪುನರುಕ್ತಿ ಬರುತ್ತದೆ. 'ಪ್ರಯಂತಿ' ಶಬ್ದಕ್ಕೆ ಸುಷುಪ್ತಿಯಲ್ಲಿ ಬ್ರಹ್ಮಪ್ರಾಪ್ತಿಯೆಂದು ಅರ್ಥ

ಮಾಡಿದರೆ ನಾಲ್ಕನ್ನು ಒಪ್ಪಿದಂತಾಗುತ್ತದೆ. ಸೃಷ್ಟಿಸ್ಥಿತಿಲಯಮಾತ್ರಕಾರಣತ್ವದ ಮಾತಿಗೆ ವಿರೋಧ ಬರುತ್ತದೆ. ವಸ್ತುತಃ ಇದು ಅಂಗೀಕಾರವಾದ. ವಿಚಾರ ಮಾಡಿದರೆ 'ಪ್ರಯಂತಿ' ಶಬ್ದಕ್ಕೆ ಲಯವೆಂಬ ಅರ್ಥವೇ ನಮಗೆ ಸಮ್ಮತ ಹೊರತು ಸುಷುಪ್ತಿಯಲ್ಲಿ ಬ್ರಹ್ಮಪ್ರಾಪ್ತಿಯೆಂಬ ಅರ್ಥವು ಸಮ್ಮತವೇ ಅಲ್ಲ.

ನೀವು 'ಜನ್ಮಾದಿ' ಶಬ್ದಕ್ಕೆ 'ತದ್‌ಗುಣಸಂವಿಜ್ಞಾನಬಹುವ್ರೀಹಿ'ಯನ್ನು ಆಶ್ರಯಿಸಿ ಜಗತ್ತಿಗೆ ಜನ್ಮವನ್ನು ಅಂಗೀಕರಿಸಿದ್ದು ವ್ಯಾಹತವಾಗಿದೆ. ಜಗತ್ತನ್ನು ಮಿಥ್ಯಾವೆಂದು ಹೇಳುತ್ತೀರಿ. ಈಗ ಜನ್ಮವನ್ನು ಜಗತ್ತಿಗೆ ಹೇಳಿದರೆ ಮಿಥ್ಯಾತ್ವವನ್ನು ಹೇಳಲಾಗದು.

ಪ್ರಶ್ನೆ :- ಗ್ರಂಥದಲ್ಲಿ 'ಜಗತೋ ಜನ್ಮಾಂಗೀಕಾರೇಽನಿತ್ಯತ್ವಾಪತ್ತ್ಯಾ ಮಿಥ್ಯಾತ್ವಾಸಿದ್ಧೇರುಕ್ತತ್ವಾಚ್ಚ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಇಲ್ಲಿ 'ಜಗತಃ ಜನ್ಮಾಂಗೀಕಾರೇ ಮಿಥ್ಯಾತ್ವಾಸಿದ್ಧೇಃ' ಜಗತ್ತಿಗೆ ಜನ್ಮವನ್ನಂಗೀಕರಿಸಿದರೆ ಮಿಥ್ಯಾತ್ವವು ಸಿದ್ಧಿಸುವುದಿಲ್ಲವೆಂದಷ್ಟೇ ಹೇಳಿದರೆ ಸಾಕಿತ್ತು. 'ಅನಿತ್ಯಾತ್ವಾಪತ್ತ್ಯಾ' ಎಂಬ ಮಾತು ಬೇಡವಾಗಿತ್ತು. ಕೇವಲ ಜನ್ಮವನ್ನು ಅಂಗೀಕರಿಸಿದರೂ ಸಹ ಮಿಥ್ಯಾತ್ವವನ್ನು ಹೇಳಲಾಗದು. ಏಕೆಂದರೆ ಜಿಜ್ಞಾಸಾಧಿಕರಣದಲ್ಲಿ 'ಯತ್ ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿ ನ ತತ್ ಧ್ವಂಸಪ್ರತಿಯೋಗೀ' 'ಯತ್ ಧ್ವಂಸಪ್ರತಿಯೋಗಿ ನ ತತ್ ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿ' ಎಂಬ ವ್ಯಾಪ್ತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ. ಅಂದರೆ ಧ್ವಂಸವಾಗುವ ವಸ್ತುವಿಗೆ ಮಿಥ್ಯಾತ್ವವನ್ನು ಹೇಳಲು ಬರುವುದಿಲ್ಲವೆಂದು ಅಭಿಪ್ರಾಯ. ಹೀಗೂ ವ್ಯಾಪ್ತಿಯಿದೆ - 'ಯತ್ ಪ್ರಾಗಭಾವ-ಪ್ರತಿಯೋಗೀ ನ ತತ್ ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿ, ಯತ್ ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿ ನ ತತ್ ಪ್ರಾಗಭಾವಪ್ರತಿಯೋಗಿ' ಎಂದು. ಆದ್ದರಿಂದ 'ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿ'ಗೆ (ಮಿಥ್ಯಾಭೂತವಾದುದಕ್ಕೆ) ಧ್ವಂಸಪ್ರತಿಯೋಗಿಯು (ಧ್ವಂಸವಾಗುವ ವಸ್ತುವು) ಹೇಗೆ ವಿರೋಧಿಯೋ ಅದರಂತೆ ಪ್ರಾಗಭಾವ-ಪ್ರತಿಯೋಗಿ'ಯು (ಹುಟ್ಟುವ ವಸ್ತುವೂ) ವಿರೋಧಿಯೇ ಆಗಿದೆ. ಹಾಗಾಗಿ ಧ್ವಂಸಾರ್ಥಕವಾದ 'ಅನಿತ್ಯತ್ವ'-ವನ್ನು ಕಾರಣವನ್ನಾಗಿ ಚಂದ್ರಿಕೆಯಲ್ಲಿ ಹೇಳುವ ಅವಶ್ಯಕತೆಯಿರಲಿಲ್ಲ.

ಉತ್ತರ :- ನೀವು ಹೇಳಿದ್ದು ಸರಿ, ಆದರೆ ಜಿಜ್ಞಾಸಾಧಿಕರಣದಲ್ಲಿ ವಿವರಣಾಭಿಮತವಾದ ನಿತ್ಯಾನಿತ್ಯವಸ್ತುವಿವೇಕದ ಖಂಡನೆಯ ಭಾಗದಲ್ಲಿ ಧ್ವಂಸಪ್ರತಿಯೋಗಿಯೇ ಅತ್ಯಂತಾಭಾವಪ್ರತಿಯೋಗಿಗೆ ವಿರೋಧಿಯಾಗಿದೆಯೆಂದು ವಿಸ್ತಾರವಾಗಿ ಹೇಳಿಯಾಗಿದೆ. ಅದರ ಸ್ಮರಣೆಯನ್ನು ತಂದುಕೊಡಬೇಕೆಂದರೆ ಧ್ವಂಸವನ್ನು ಒಪ್ಪಿದರೆ ಮಿಥ್ಯಾತ್ವ ಸಿದ್ಧಿಸುವುದಿಲ್ಲವೆಂದು ಹೇಳಲೇಬೇಕು. ಆದರೆ 'ಪ್ರಥಮಾತಿಕ್ರಮಣೇ ಮಾನಾಭಾವಾತ್' ಜನ್ಮಸ್ಥಿತಿಗಳನ್ನು ಬಿಟ್ಟು ಕೇವಲ ಧ್ವಂಸವನ್ನು ಹೇಳಿದರೆ ತಪ್ಪಾಗುತ್ತದೆ. ಇನ್ನು ಕೇವಲ ಜನ್ಮಸ್ಥಿತಿಗಳನ್ನಷ್ಟೇ ಹೇಳಿದರೆ ಮಿಥ್ಯಾತ್ವದಿಂದ ವಿರೋಧವು ಸ್ಪಷ್ಟವಾಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಗ್ರಂಥಕಾರರ ಮಾತು ಅತ್ಯಂತ ಅರ್ಥಪೂರ್ಣವಾಗಿದೆ.

ಶ್ರುತ್ಯನುಸಾರಿಯಾದ್ದರಿಂದ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳು ಜನ್ಮಾದಿಪದದ ಅರ್ಥವೆಂದು ತಿಳಿಯಬೇಕು. ಹೀಗೆ ಅದ್ವೈತಮತವನ್ನು ಖಂಡನೆ ಮಾಡಿದ್ದರಿಂದ ರಾಮಾನುಜಮತವನ್ನೂ ಖಂಡನೆ ಮಾಡಿದಂತಾಯಿತು. 'ಜನ್ಮಾದೀತಿ ಸೃಷ್ಟಿಸ್ಥಿತಿಪ್ರಲಯಮ್' ಎಂಬ ಶ್ರೀಭಾಷ್ಯದ ಮಾತಿಗೂ ಅದ್ವೈತಿಗಳಿಗೆ ನೀಡಿದ ಉತ್ತರವನ್ನೇ ಹೇಳಬೇಕು.

ಮತ್ತೊಂದು ಮತವೂ ಸಹ ಇದರಿಂದ ನಿರಾಕೃತವಾಯಿತು. 'ಅಸ್ಯ' ಚತುರ್ಮುಖನ ಜನ್ಮ = ಹುಟ್ಟುವಿಕೆಯು ಯತಃ = ಯಾರಿಂದ ಆಗುತ್ತದೋ, ಎಂಬುದಾಗಿ ಜನ್ಮವನ್ನು ಮಾತ್ರ ಇಟ್ಟುಕೊಳ್ಳುವ ಮತವು

ಶ್ರುತಿವಿರುದ್ಧವಾಗಿದೆ. ಅದರಂತೆ 'ಜನ್ಮಾದಿ' ಎಂಬಲ್ಲಿ ಆದಿಪದದಿಂದ ಸ್ಥಿತಿಯನ್ನಷ್ಟೇ ಇಟ್ಟುಕೊಳ್ಳಬೇಕೆಂಬ ಮತವು ನಿರಸ್ತವಾಯಿತು. ಈ ಎಲ್ಲಾ ಮತಗಳು ಶ್ರುತಿಗೆ ವಿರುದ್ಧವಾಗಿವೆ.

ಸುಧಾವಾಕ್ಯ ಹೀಗಿದೆ - 'ಅನ್ಯೇತು ಜನ್ಮಾದೀತಿ ತದ್ಗುಣಸಂವಿಜ್ಞಾನಬಹುವ್ರೀಹಿಮುಪಾದಾಯ ಸೃಷ್ಟಿಸ್ಥಿತಿಭಂಗಂ ಸಮಾಸಾರ್ಥ ಇತಿ ವ್ಯಾಕುರ್ವತೇ' 'ಬೇರೆಯವರು ಜನ್ಮಾದಿ' ಎಂಬ ಪದಕ್ಕೆ 'ತದ್ ಗುಣಸಂವಿಜ್ಞಾನ ಬಹುವ್ರೀಹಿಯನ್ನು ಸ್ವೀಕರಿಸಿ ಸೃಷ್ಟಿ, ಸ್ಥಿತಿ, ಲಯಗಳು ಸಮಾಸಾರ್ಥವೆಂದು ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ'. ಎಂಬ ಸುಧಾವಾಕ್ಯವನ್ನೂ ಈಗ ವಿವರಿಸಿದಂತೆ ಆಯಿತು. ಸುಧಾದಲ್ಲಿ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕರ್ತೃತ್ವವನ್ನು ಹೇಳುವ ಶ್ರುತಿಯನ್ನು ಉದಾಹರಿಸಿಲ್ಲ. ಇಲ್ಲಿ ಆ ಶ್ರುತಿಗಳನ್ನು 'ಯತೋ ವಾ' ಇತ್ಯಾದಿವಾಕ್ಯದಿಂದ ಉದಾಹರಿಸುತ್ತಿದ್ದಾರೆ.

ಪ್ರಶ್ನೆ :- ವಿಷಯವಾಕ್ಯವೆಂದು ಉದಾಹರಿಸಿದ 'ಯ ಆತ್ಮನಮ್' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ವಿಚಾರವಿಧಿಯೇ ಕೇಳಿಸುತ್ತಿಲ್ಲ. ಹಾಗಾಗಿ ಇದು ವಿಷಯವಾಕ್ಯವಾಗುವುದಿಲ್ಲ. ವಿಚಾರವಿಧಿವಾಕ್ಯದಲ್ಲಿ ಹೇಳಿದ ಲಕ್ಷಣವನ್ನಷ್ಟೇ ಈ ಸೂತ್ರದಲ್ಲಿ ಸಂಗ್ರಹ ಮಾಡಿದ್ದಾರೆಂದು ಸುಧಾದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ -

'ನಚೈಕಮೇವ ಸರ್ವತ್ರ ಜಿಜ್ಞಾಸಾವಿಧಾಯಕಶ್ರುತಿಷು ಲಕ್ಷಣಂ ಶ್ರೂಯತೇ।

''ಕಿಂತ್ವಾಸು ಬ್ರಹ್ಮಜಿಜ್ಞಾಸಾವಿಧಾತ್ರೀಷು ಶ್ರುತಿಷು ಕ್ವಚಿತ್‌ಸೃಷ್ಟಿಃ ಕ್ವಚಿತ್ ಸ್ಥಿತಿರಿತ್ಯಷ್ಟಕಂ ಜಿಜ್ಞಾಸ್ಯಾದ್ಧರೇರ್ವಿಶ್ವಸ್ಯೋಕ್ತಮಿತ್ಯನೇಕಲಕ್ಷಣೋಕ್ತ್ಯುಪಯೋಗಃ' 'ಜಿಜ್ಞಾಸಾವಿಧಾಯಕವಾದ ಶ್ರುತಿಗಳಲ್ಲಿ ಒಂದೇ ಲಕ್ಷಣವನ್ನು ಎಲ್ಲೆಡೆ ಹೇಳಿಲ್ಲ. ಕೆಲವು ವಿಧಿವಾಕ್ಯಗಳಲ್ಲಿ ಸೃಷ್ಟಿಯನ್ನು, ಇನ್ನು ಕೆಲವು ವಿಧಿವಾಕ್ಯಗಳಲ್ಲಿ ಸ್ಥಿತಿಯನ್ನು, ಹೀಗೆ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳು ಜಿಜ್ಞಾಸ್ಯನಾದ ಹರಿಯಿಂದ ಜಗತ್ತಿನಲ್ಲಿ ಆಗುತ್ತವೆಂಬುದೇ ಅನೇಕ ಲಕ್ಷಣಗಳನ್ನು ಹೇಳಿದರ ಉಪಯೋಗ' ಎಂದು. ಇದರಿಂದ ಏನು ತಿಳಿಯುತ್ತದೆಂದರೆ ವಿಚಾರ ವಿಧಾಯಕವಾಕ್ಯಗಳಲ್ಲಿ ಬ್ರಹ್ಮನ ಸೃಷ್ಟ್ಯಾದಿಕರ್ತೃತ್ವವನ್ನು ಒಂದೇ ಕಡೆ ಹೇಳದೆ ಒಂದೊಂದನ್ನು ಒಂದೊಂದು ಕಡೆ ಹೇಳಿದ್ದಾರೆ. ಆ ಎಲ್ಲ ಲಕ್ಷಣಗಳನ್ನು ಸೇರಿಸಿ ಈ ಸೂತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಆದರೆ 'ಯ ಆತ್ಮನಮ್' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ವಿಚಾರವಿಧಿಯನ್ನು ಮಾಡುತ್ತಲೇ ಇಲ್ಲ. ವಿಧಿವಾಕ್ಯದಲ್ಲಿರುವ ಸೃಷ್ಟ್ಯಾದಿಗಳೇ ಈ ಸೂತ್ರದಲ್ಲಿ ವಿವಕ್ಷಿತ. ಈ ಶ್ರುತಿಯಲ್ಲಿ ನಿಯಮನಾದಿಗಳನ್ನು ಹೇಳಿದ್ದರೂ ವಿಧಿವಾಕ್ಯವಲ್ಲದ್ದರಿಂದ ವಿಷಯವಾಕ್ಯವಾಗಲಾರದು. ಆದ್ದರಿಂದ ಇದನ್ನು ವಿಷಯವಾಕ್ಯವೆಂದು ಚಂದ್ರಿಕೆಯಲ್ಲಿ ಹೇಳಿದ್ದು ಹೇಗೆ ಯುಕ್ತವಾಗುತ್ತದೆ?

ಉತ್ತರ :- ವಿಧಿವಾಕ್ಯಗಳಲ್ಲಿರುವ ಲಕ್ಷಣವನ್ನಷ್ಟೇ ಈ ಸೂತ್ರದಲ್ಲಿ ಸಂಗ್ರಹಿಸಿದ್ದಾರೆಂಬುದು ತಪ್ಪು. ಯಾವುದೇ ಶ್ರುತಿಗಳಲ್ಲಿ ಎಲ್ಲೆಲ್ಲಿ ಬ್ರಹ್ಮನ ಪ್ರಸಿದ್ಧಲಕ್ಷಣವನ್ನು ಹೇಳಿದ್ದಾರೋ, ಆ ಎಲ್ಲಾ ಲಕ್ಷಣಗಳನ್ನು ಈ ಸೂತ್ರದಲ್ಲಿ ಸಂಗ್ರಹಿಸಿದ್ದಾರೆ. ಹೊರತು ವಿಧಿವಾಕ್ಯಗಳಲ್ಲಿರುವ ಲಕ್ಷಣಗಳನ್ನಷ್ಟೇ ಅಲ್ಲ. ಆದ್ದರಿಂದಲೇ ತತ್ತ್ವಪ್ರದೀಪದಲ್ಲಿ 'ವಿವೇಶ ಭೂತಾನಿ ಚರಾಚರಾಣೀತ್ಯರ್ಥಾನ್ನಿಯಮನಮ್' 'ಚರಾಚರಭೂತಪದಾರ್ಥಗಳಲ್ಲಿ ಬ್ರಹ್ಮನು ಪ್ರವೇಶ ಮಾಡುತ್ತಾನೆಂದರೆ ಅರ್ಥಾತ್ ನಿಯಮನವು ತಿಳಿಯುತ್ತದೆ' ಎಂದು ಹೇಳಿದೆ. ವಿಚಾರವಿಧಾನ ಮಾಡದಿದ್ದರೂ ವಿಷಯವಾಕ್ಯವೆಂದು ಉದಾಹರಿಸಿದ್ದಾರೆ. ಹಾಗಾದರೆ ಸುಧಾದಲ್ಲಿ ಹೇಳಿದ ವಾಕ್ಯಕ್ಕೆ ಏನು ಅರ್ಥ? ಎಂದರೆ ಹೆಚ್ಚಾಗಿ ವಿಧಿವಾಕ್ಯದಲ್ಲಿರುವ ಲಕ್ಷಣವನ್ನೇ ಹೇಳಲಾಗಿದೆಯೆಂಬ ಸಂಭಾವನಾಭಿಪ್ರಾಯದಿಂದ ಹೇಳಿದ್ದೆಂದು ತಿಳಿಯಬೇಕು.

ಅಥವಾ ಅಂತರ್ಯಾಮಿವಿಷಯಕವಾದ ಬ್ರಾಹ್ಮಣಭಾಗದ ಉಪಕ್ರಮದಲ್ಲಿರುವ 'ಯೋ ವೈ ತತ್ಸೂತ್ರಂ ವಿದ್ಯಾತ್ ತಂ ಚಾಂತರ್ಯಾಮಿಣಮಿತಿ ಸ ಬ್ರಹ್ಮವಿತ್ಸಲೋಕವಿತ್' ಅರ್ಥವಾದವಾಕ್ಯವು 'ಬ್ರಹ್ಮವಿತ್' ಎಂದು ಜಿಜ್ಞಾಸೆಯನ್ನು ವಿಧಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ 'ಯ ಆತ್ಮಾನಮ್' ಎಂಬ ಉಪಕ್ರಮವಾಕ್ಯವು ವಿಧಿವಾಕ್ಯವಾದ್ದರಿಂದ ಇದೂ ವಿಧಿವಾಕ್ಯವೇ ಆಗಿದೆ. ಹಾಗಾಗಿ ದೋಷವಿಲ್ಲ. 'ಯ ಆತ್ಮಾನಂ' ಎಂಬ ಶ್ರುತಿಯು ಗೀತಾತಾತ್ಪರ್ಯದಲ್ಲಿ ಆಚಾರ್ಯರಿಂದ ಉದಾಹರಿಸಲ್ಪಟ್ಟಿದೆ.

ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳು ಪ್ರಮಾಣಸಿದ್ಧವೆಂದು ನಿರ್ಣಯವಾಯಿತು. ಆದರೆ ಸೂತ್ರಕಾರರು ಇದನ್ನು ಲಕ್ಷಣವೆಂದು ಅಂಗೀಕರಿಸಿದ್ದಾರೆಯೇ? ಎಂದರೆ ಸೂತ್ರಕಾರರೇ ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳನ್ನು ಲಕ್ಷಣವೆಂದು ಹೇಳಿದ್ದಾರೆ.

ಉತ್ಪತ್ತಿಸ್ಥಿತಿಸಂಹಾರಾ ನಿಯತಿರ್ಜ್ಞಾನಮಾವೃತಿಃ।
ಬಂಧಮೋಕ್ಷೌ ಚ ಪುರುಷಾತ್ ಯಸ್ಮಾತ್ಸ ಹರಿರೇಕರಾಟ್ ॥ ಎಂದು.

ಶಂಕೆ - ನಿಯಮನಾದಿಗಳನ್ನು ಸೃಷ್ಟ್ಯಾದಿಮೂರರಲ್ಲೇ ಸೇರಿಸಲು ಬರುವಾಗ ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳಬೇಕಾಗಿಲ್ಲ.

ಸಮಾಧಾನ - ಜನ್ಮಪದಾರ್ಥ ಹಾಗು ನಿಯಮನಪದಾರ್ಥ ಒಂದೇ ಆದ್ದರಿಂದ ನಿಯಮನವನ್ನು ಜನ್ಮಕ್ಕಿಂತ ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳಬೇಕಾಗಿಲ್ಲವೆಂದು ಅಭಿಪ್ರಾಯವೋ? ಅಥವಾ ನಿಯಮನಕ್ಕೂ ಜನ್ಮವಿರುವುದರಿಂದ ಜನ್ಮಗ್ರಹಣದಿಂದಲೇ ನಿಯಮನವೂ ಪ್ರಾಪ್ತವಾಯಿತು ಎಂದು ಅಭಿಪ್ರಾಯವೋ? ಮೊದಲನೆಯ ಪಕ್ಷವು ಸರಿಯಲ್ಲ ತನ್ನ ತನ್ನ ವ್ಯಾಪಾರದಲ್ಲಿ ತೊಡಗುವಂತೆ ಮಾಡುವುದನ್ನು ನಿಯಮನವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಹುಟ್ಟುವಿಕೆಯನ್ನು ಜನ್ಮವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಹೀಗೆ ಎರಡರ ಲಕ್ಷಣವು ಬೇರೆ ಬೇರೆಯಾದ್ದರಿಂದ ಎರಡನ್ನೂ ಒಂದೇ ಎಂದು ಹೇಳಲಾಗದು. ಇನ್ನು ಎರಡನೆಯ ಪಕ್ಷವೂ ಸರಿಯಲ್ಲ. ನಾಶಕ್ಕೆ ಜನ್ಮವಿದ್ದರೂ ಜನ್ಮಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾಗಿ ನಾಶವನ್ನು ಹೇಗೆ ಒಪ್ಪುತ್ತೀರೋ, ಆದರಂತೆ ನಿಯಮನಕ್ಕೆ ಜನ್ಮವಿದ್ದರೂ ಜನ್ಮಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾಗಿ ಒಪ್ಪಲು ಯಾವ ಬಾಧಕವೂ ಇಲ್ಲ. ಒಂದು ವೇಳೆ ಹೀಗೆ ಒಪ್ಪದಿದ್ದರೆ ಜನ್ಮವನ್ನಾಗಲೀ ನಾಶವನ್ನಾಗಲೀ ಪ್ರತ್ಯೇಕವಾಗಿ ನಿಮಗೆ ಸಮರ್ಥಿಸಲಾಗದು. ಏಕೆಂದರೆ ಉತ್ಪತ್ತಿ ಎಂದರೆ ಪ್ರಾಗಭಾವದ ಧ್ವಂಸ ಎಂದರ್ಥ. ಹಾಗಾಗಿ ಉತ್ಪತ್ತಿಯು ಧ್ವಂಸರೂಪವಾಗಿದೆ. ವಿನಾಶ ಎಂದರೆ ಧ್ವಂಸದ ಉತ್ಪತ್ತಿ ಎಂದರ್ಥ. ಆದ್ದರಿಂದ ನಾಶವು ಉತ್ಪತ್ತಿರೂಪವಾಗಿದೆ. ಆದ್ದರಿಂದ ಎರಡಕ್ಕೂ ಪರಸ್ಪರವಾಗಿ ಪ್ರತ್ಯೇಕತೆಯು ಬಾರದಿರಬೇಕಾದೀತು.

ಅಥವಾ ಬ್ರಹ್ಮನಿಗೆ ಉತ್ಪತ್ತಿಕಾರಣತ್ವವನ್ನು ಹೇಳಿದಾಗ ಧ್ವಂಸಕ್ಕೂ ಉತ್ಪತ್ತಿ ಇರುವುದರಿಂದ ಧ್ವಂಸಕಾರಣತ್ವವೂ ಲಬ್ಧವಾಯಿತು. ನಿನ್ನ ಪಕ್ಷದಲ್ಲಿಯೂ ಮೂರರ ಕಾರಣತ್ವವನ್ನು ಸಮರ್ಥಿಸಲಾಗದು. ಅವಾಂತರ ವಿಶೇಷವಿರುವುದರಿಂದ ಧ್ವಂಸಕ್ಕೆ ಪಾರ್ಥಕ್ಯವನ್ನು ಒಪ್ಪಿದರೆ ನಮ್ಮಲ್ಲಿಯೂ ಅವಾಂತರ ವಿಶೇಷವಿರುವುದರಿಂದ ನಿಯಮನಕ್ಕೆ ಪಾರ್ಥಕ್ಯವನ್ನು ಒಪ್ಪುತ್ತೇವೆ. ಅಂದರೆ ನಿಯಮನಾದಿಗಳಿಗೆ ಜನ್ಮಸ್ಥಿತ್ಯಾದಿಗಳಿದ್ದರೂ ಅವುಗಳಿಗಿಂತ ಭಿನ್ನವಾಗಿದೆಯೆಂದು ಅನುಭವಕ್ಕೆ ಬರುತ್ತದೆ.

ಇನ್ನು ಮೋಕ್ಷವನ್ನು ಬಂಧಧ್ವಂಸವೆಂದು ಹೇಳಿದರೆ ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವ - ಧ್ವಂಸರೂಪ-

ವಾಗಬೇಕಾದೀತು. ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವದಧ್ವಂಸರೂಪವೆಂಬುದು ಸತ್ಯ. ಆದರೆ ಉತ್ಪದ್ಯಮಾನವಾದ ವಸ್ತುವಿನ ಧ್ವಂಸರೂಪವಲ್ಲ. ಧ್ವಂಸವೆಂದರೆ ಉತ್ಪದ್ಯಮಾನವಾದ ವಸ್ತುವಿನ ಧ್ವಂಸ.

ಅಥವಾ, ಬಂಧವೆಂಬುದು ವಿಶೇಷಣ. ಬದ್ಧ ಎಂಬುದು ವಿಶಿಷ್ಟವಾದ ಪದಾರ್ಥಾಂತರ. ನಾಶಪದದಿಂದ ಬದ್ಧವಾದ ವಸ್ತುವಿನ ನಾಶವನ್ನು ವಿವಕ್ಷಿಸುತ್ತೇವೆಯೇ ಹೊರತು ಬಂಧದ ನಾಶವನ್ನು ತೆಗೆದುಕೊಳ್ಳುವುದಿಲ್ಲ.

ಅಥವಾ ಬದ್ಧವಾದ ಘಟಪಟಾದಿ ಎಲ್ಲಾಧರ್ಮಿಗಳನ್ನು ಉಪಲಕ್ಷಣಯಾ ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ಇವೆಲ್ಲದರ ಧ್ವಂಸವನ್ನು ನಾಶ ಪದ ಹೇಳುತ್ತಿದೆ. ಆದ್ದರಿಂದ ನಾಶಪದದ ಅರ್ಥವೇ ಬೇರೆ. ಮೋಕ್ಷಪದದ ಅರ್ಥವೇ ಬೇರೆ.

ಅಥವಾ ಮೋಕ್ಷವೆಂದರೆ ಇಷ್ಟಪ್ರಾಪ್ತಿ ಮತ್ತು ಅನಿಷ್ಟನಿವೃತ್ತಿರೂಪವಾಗಿ ಪುರುಷಾರ್ಥವಾಗಿದೆ. ಇದನ್ನು ನಾಶ ಪದವು ಹೇಳುವುದಿಲ್ಲ, ಅದಕ್ಕೋಸ್ಕರ ಮೋಕ್ಷಪದ ಹೇಳಿದ್ದು ಸಾರ್ಥಕವಾಗಿದೆ.




'ಜನ್ಮಾದಿ' ಎಂದರೆ ಸೃಷ್ಟಿ, ಸ್ಥಿತಿ, ಲಯಗಳನ್ನಷ್ಟೇ ವಿವಕ್ಷಿಸಬೇಕೆಂದು ಅದ್ವೈತಿಗಳು ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ. ಆದರೆ ವಿಷಯವಾಕ್ಯವೆನಿಸಿದ 'ಯತೋ ವಾ' ಎಂಬ ಶ್ರುತಿಯು ಸೃಷ್ಟ್ಯಾದಿಗಳ ಜೊತೆಗೆ ಮೋಕ್ಷವನ್ನು ಹೇಳಿದ್ದರಿಂದ ಕೇವಲ ಮೂರನ್ನು ಮಾತ್ರ ವಿವಕ್ಷಿಸುವುದು ತಪ್ಪಾಗುತ್ತದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೆ, 'ಯಸ್ಮಿನ್ ದ್ಯೌಃ' ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳಲ್ಲಿ ಕೇವಲ ಒಂದೊಂದನ್ನೇ ಹೇಳಿದ್ದಾರೆ. ಮತ್ತು ಸ್ಕಾಂದ ಮೊದಲಾದ ಪುರಾಣಗಳಲ್ಲಿ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳನ್ನು ಹೇಳಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕರ್ತೃತ್ವವನ್ನು ಹೇಳಲೇಬೇಕು. ನಿಯಮನಾದಿಗಳನ್ನು ಜನ್ಮಾದಿಗಳಲ್ಲಿ ಅಂತರ್ಭಾವ ಮಾಡುವ ಸಾಹಸವೂ ವ್ಯರ್ಥ. ಹಾಗೆ ಮಾಡುವುದಾದರೆ ಲಯಕ್ಕೂ ಜನ್ಮವಿರುವುದರಿಂದ ಜನ್ಮದಲ್ಲಿಯೇ ಲಯವನ್ನು ಸೇರಿಸಬಹುದು. ಆವಾಗ ನಿಮ್ಮ ತ್ರಿವಿಧ ಕಾರಣತ್ವಕ್ಕೂ ಚ್ಯುತಿ ಬರುತ್ತದೆ.



• • • • •

## ಜನ್ಮಾದಿಪದದಿಂದ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳನ್ನು ವಿವಕ್ಷಿಸಬೇಕು

### तात्पर्यचन्द्रिका

**अज्ञानं तु न बन्धः, किं तु बन्धकम् । ननु तथाऽपि नियमनज्ञानादीन् 'अस्य' इत्यनेन विवक्षित्वा तेषामुत्पत्त्यादिके जन्मादिपदेनोक्ते नियमनादीन् प्रति जगत्प्रतीव ब्रह्मकारणं सिद्ध्यति, किं जन्मादीत्यत्र तद्ग्रहणेनेति चेन्न, 'अस्य' इत्यनेन निर्दिष्टधर्मिभूतजगत्सम्बन्धार्थं धर्माणां नियमनादीनां धर्मनिर्देशकेन जन्मादिपदेनैव ग्राह्यत्वात् । न चेत्परमते 'अस्य' इत्यनेन भङ्गं विवक्षित्वाऽ-**

ಅಥವಾ ಅಂತರ್ಯಾಮಿವಿಷಯಕವಾದ ಬ್ರಾಹ್ಮಣಭಾಗದ ಉಪಕ್ರಮದಲ್ಲಿರುವ 'ಯೋ ವೈ ತತ್ಸೂತ್ರಂ ವಿದ್ಯಾತ್ ತಂ ಚಾಂತರ್ಯಾಮಿಣಮಿತಿ ಸ ಬ್ರಹ್ಮವಿತ್ಸಲೋಕವಿತ್' ಅರ್ಥವಾದವಾಕ್ಯವು 'ಬ್ರಹ್ಮವಿತ್' ಎಂದು ಜಿಜ್ಞಾಸೆಯನ್ನು ವಿಧಿಸುತ್ತಿದೆ. ಆದ್ದರಿಂದ 'ಯ ಆತ್ಮಾನಮ್' ಎಂಬ ಉಪಕ್ರಮವಾಕ್ಯವು ವಿಧಿವಾಕ್ಯವಾದ್ದರಿಂದ ಇದೂ ವಿಧಿವಾಕ್ಯವೇ ಆಗಿದೆ. ಹಾಗಾಗಿ ದೋಷವಿಲ್ಲ. 'ಯ ಆತ್ಮಾನಂ' ಎಂಬ ಶ್ರುತಿಯು ಗೀತಾತಾತ್ಪರ್ಯದಲ್ಲಿ ಆಚಾರ್ಯರಿಂದ ಉದಾಹರಿಸಲ್ಪಟ್ಟಿದೆ.

ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳು ಪ್ರಮಾಣಸಿದ್ಧವೆಂದು ನಿರ್ಣಯವಾಯಿತು. ಆದರೆ ಸೂತ್ರಕಾರರು ಇದನ್ನು ಲಕ್ಷಣವೆಂದು ಅಂಗೀಕರಿಸಿದ್ದಾರೆಯೇ? ಎಂದರೆ ಸೂತ್ರಕಾರರೇ ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳನ್ನು ಲಕ್ಷಣವೆಂದು ಹೇಳಿದ್ದಾರೆ.

> ಉತ್ಪತ್ತಿಸ್ಥಿತಿಸಂಹಾರಾ ನಿಯತಿರ್ಜ್ಞಾನಮಾವೃತಿಃ।
> ಬಂಧಮೋಕ್ಷೌ ಚ ಪುರುಷಾತ್ ಯಸ್ಮಾತ್ಸ ಹರಿರೇಕರಾಟ್ ॥ ಎಂದು.

ಶಂಕೆ - ನಿಯಮನಾದಿಗಳನ್ನು ಸೃಷ್ಟ್ಯಾದಿಮೂರರಲ್ಲೇ ಸೇರಿಸಲು ಬರುವಾಗ ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳಬೇಕಾಗಿಲ್ಲ.

ಸಮಾಧಾನ - ಜನ್ಮಪದಾರ್ಥ ಹಾಗು ನಿಯಮನಪದಾರ್ಥ ಒಂದೇ ಆದ್ದರಿಂದ ನಿಯಮನವನ್ನು ಜನ್ಮಕ್ಕಿಂತ ಪ್ರತ್ಯೇಕವಾಗಿ ಹೇಳಬೇಕಾಗಿಲ್ಲವೆಂದು ಅಭಿಪ್ರಾಯವೋ? ಅಥವಾ ನಿಯಮನಕ್ಕೂ ಜನ್ಮವಿರುವುದರಿಂದ ಜನ್ಮಗ್ರಹಣದಿಂದಲೇ ನಿಯಮನವೂ ಪ್ರಾಪ್ತವಾಯಿತು ಎಂದು ಅಭಿಪ್ರಾಯವೋ? ಮೊದಲನೆಯ ಪಕ್ಷವು ಸರಿಯಲ್ಲ ತನ್ನ ತನ್ನ ವ್ಯಾಪಾರದಲ್ಲಿ ತೊಡಗುವಂತೆ ಮಾಡುವುದನ್ನು ನಿಯಮನವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಹುಟ್ಟುವಿಕೆಯನ್ನು ಜನ್ಮವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಹೀಗೆ ಎರಡರ ಲಕ್ಷಣವು ಬೇರೆ ಬೇರೆಯಾದ್ದರಿಂದ ಎರಡನ್ನೂ ಒಂದೇ ಎಂದು ಹೇಳಲಾಗದು. ಇನ್ನು ಎರಡನೆಯ ಪಕ್ಷವೂ ಸರಿಯಲ್ಲ. ನಾಶಕ್ಕೆ ಜನ್ಮವಿದ್ದರೂ ಜನ್ಮಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾಗಿ ನಾಶವನ್ನು ಹೇಗೆ ಒಪ್ಪುತ್ತೀರೋ, ಅದರಂತೆ ನಿಯಮನಕ್ಕೆ ಜನ್ಮವಿದ್ದರೂ ಜನ್ಮಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾಗಿ ಒಪ್ಪಲು ಯಾವ ಬಾಧಕವೂ ಇಲ್ಲ. ಒಂದು ವೇಳೆ ಹೀಗೆ ಒಪ್ಪದಿದ್ದರೆ ಜನ್ಮವನ್ನಾಗಲೀ ನಾಶವನ್ನಾಗಲೀ ಪ್ರತ್ಯೇಕವಾಗಿ ನಿಮಗೆ ಸಮರ್ಥಿಸಲಾಗದು. ಏಕೆಂದರೆ ಉತ್ಪತ್ತಿ ಎಂದರೆ ಪ್ರಾಗಭಾವದ ಧ್ವಂಸ ಎಂದರ್ಥ. ಹಾಗಾಗಿ ಉತ್ಪತ್ತಿಯು ಧ್ವಂಸರೂಪವಾಗಿದೆ. ವಿನಾಶ ಎಂದರೆ ಧ್ವಂಸದ ಉತ್ಪತ್ತಿ ಎಂದರ್ಥ. ಆದ್ದರಿಂದ ನಾಶವು ಉತ್ಪತ್ತಿರೂಪವಾಗಿದೆ. ಆದ್ದರಿಂದ ಎರಡಕ್ಕೂ ಪರಸ್ಪರವಾಗಿ ಪ್ರತ್ಯೇಕತೆಯು ಬಾರದಿರಬೇಕಾದೀತು.

ಅಥವಾ ಬ್ರಹ್ಮನಿಗೆ ಉತ್ಪತ್ತಿಕಾರಣತ್ವವನ್ನು ಹೇಳಿದಾಗ ಧ್ವಂಸಕ್ಕೂ ಉತ್ಪತ್ತಿ ಇರುವುದರಿಂದ ಧ್ವಂಸಕಾರಣತ್ವವೂ ಲಬ್ಧವಾಯಿತು. ನಿನ್ನ ಪಕ್ಷದಲ್ಲಿಯೂ ಮೂರರ ಕಾರಣತ್ವವನ್ನು ಸಮರ್ಥಿಸಲಾಗದು. ಅವಾಂತರ ವಿಶೇಷವಿರುವುದರಿಂದ ಧ್ವಂಸಕ್ಕೆ ಪಾರ್ಥಕ್ಯವನ್ನು ಒಪ್ಪಿದರೆ ನಮ್ಮಲ್ಲಿಯೂ ಅವಾಂತರ ವಿಶೇಷವಿರುವುದರಿಂದ ನಿಯಮನಕ್ಕೆ ಪಾರ್ಥಕ್ಯವನ್ನು ಒಪ್ಪುತ್ತೇವೆ. ಅಂದರೆ ನಿಯಮನಾದಿಗಳಿಗೆ ಜನ್ಮಸ್ಥಿತ್ಯಾದಿಗಳಿದ್ದರೂ ಅವುಗಳಿಗಿಂತ ಭಿನ್ನವಾಗಿದೆಯೆಂದು ಅನುಭವಕ್ಕೆ ಬರುತ್ತದೆ.

ಇನ್ನು ಮೋಕ್ಷವನ್ನು ಬಂಧಧ್ವಂಸವೆಂದು ಹೇಳಿದರೆ ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವ - ಧ್ವಂಸರೂಪ-

ವಾಗಬೇಕಾದೀತು. ಉತ್ಪತ್ತಿಯು ಪ್ರಾಗಭಾವದಧ್ವಂಸರೂಪವೆಂಬುದು ಸತ್ಯ. ಆದರೆ ಉತ್ಪದ್ಯಮಾನವಾದ ವಸ್ತುವಿನ ಧ್ವಂಸರೂಪವಲ್ಲ. ಧ್ವಂಸವೆಂದರೆ ಉತ್ಪದ್ಯಮಾನವಾದ ವಸ್ತುವಿನ ಧ್ವಂಸ.

ಅಥವಾ, ಬಂಧವೆಂಬುದು ವಿಶೇಷಣ. ಬದ್ಧ ಎಂಬುದು ವಿಶಿಷ್ಟವಾದ ಪದಾರ್ಥಾಂತರ. ನಾಶಪದದಿಂದ ಬದ್ಧವಾದ ವಸ್ತುವಿನ ನಾಶವನ್ನು ವಿವಕ್ಷಿಸುತ್ತೇವೆಯೇ ಹೊರತು ಬಂಧದ ನಾಶವನ್ನು ತೆಗೆದುಕೊಳ್ಳುವುದಿಲ್ಲ.

ಅಥವಾ ಬದ್ಧವಾದ ಘಟಪಟಾದಿ ಎಲ್ಲಾಧರ್ಮಿಗಳನ್ನು ಉಪಲಕ್ಷಣಯಾ ತೆಗೆದುಕೊಳ್ಳಬೇಕು. ಇವೆಲ್ಲದರ ಧ್ವಂಸವನ್ನು ನಾಶ ಪದ ಹೇಳುತ್ತಿದೆ. ಆದ್ದರಿಂದ ನಾಶಪದದ ಅರ್ಥವೇ ಬೇರೆ. ಮೋಕ್ಷಪದದ ಅರ್ಥವೇ ಬೇರೆ.

ಅಥವಾ ಮೋಕ್ಷವೆಂದರೆ ಇಷ್ಟಪ್ರಾಪ್ತಿ ಮತ್ತು ಅನಿಷ್ಟನಿವೃತ್ತಿರೂಪವಾಗಿ ಪುರುಷಾರ್ಥವಾಗಿದೆ. ಇದನ್ನು ನಾಶ ಪದವು ಹೇಳುವುದಿಲ್ಲ, ಆದಕ್ಕೋಸ್ಕರ ಮೋಕ್ಷಪದ ಹೇಳಿದ್ದು ಸಾರ್ಥಕವಾಗಿದೆ.




'ಜನ್ಮಾದಿ' ಎಂದರೆ ಸೃಷ್ಟಿ, ಸ್ಥಿತಿ, ಲಯಗಳನ್ನಷ್ಟೇ ವಿವಕ್ಷಿಸಬೇಕೆಂದು ಅದ್ವೈತಿಗಳು ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ. ಆದರೆ ವಿಷಯವಾಕ್ಯವೆನಿಸಿದ 'ಯತೋ ವಾ' ಎಂಬ ಶ್ರುತಿಯು ಸೃಷ್ಟ್ಯಾದಿಗಳ ಜೊತೆಗೆ ಮೋಕ್ಷವನ್ನು ಹೇಳಿದ್ದರಿಂದ ಕೇವಲ ಮೂರನ್ನು ಮಾತ್ರ ವಿವಕ್ಷಿಸುವುದು ತಪ್ಪಾಗುತ್ತದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೆ, 'ಯಸ್ಮಿನ್ ದ್ಯೌಃ' ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳಲ್ಲಿ ಕೇವಲ ಒಂದೊಂದನ್ನೇ ಹೇಳಿದ್ದಾರೆ. ಮತ್ತು ಸ್ಕಾಂದ ಮೊದಲಾದ ಪುರಾಣಗಳಲ್ಲಿ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳನ್ನು ಹೇಳಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕರ್ತೃತ್ವವನ್ನು ಹೇಳಲೇಬೇಕು. ನಿಯಮನಾದಿ-ಗಳನ್ನು ಜನ್ಮಾದಿಗಳಲ್ಲಿ ಅಂತರ್ಭಾವ ಮಾಡುವ ಸಾಹಸವೂ ವ್ಯರ್ಥ. ಹಾಗೆ ಮಾಡುವುದಾದರೆ ಲಯಕ್ಕೂ ಜನ್ಮವಿರುವುದರಿಂದ ಜನ್ಮದಲ್ಲಿಯೇ ಲಯವನ್ನು ಸೇರಿಸಬಹುದು. ಆವಾಗ ನಿಮ್ಮ ತ್ರಿವಿಧ ಕಾರಣತ್ವಕ್ಕೂ ಚ್ಯುತಿ ಬರುತ್ತದೆ.



• • • • •

## ಜನ್ಮಾದಿಪದದಿಂದ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳನ್ನು ವಿವಕ್ಷಿಸಬೇಕು

### तात्पर्यचन्द्रिका

अज्ञानं तु न बन्धः, किं तु बन्धकम् । ननु तथाऽपि नियमनज्ञानादीन् 'अस्य' इत्यनेन विवक्षित्वा तेषामुत्पत्त्यादिके जन्मादिपदेनोक्ते नियमनादीन् प्रति जगत्प्रतीव ब्रह्मकारणं सिद्ध्यति, किं जन्मादीत्यत्र तद्ग्रहणेनेति चेन्न, 'अस्य' इत्यनेन निर्दिष्टधर्मिभूतजगत्सम्बन्धार्थं धर्माणां नियमनादीनां धर्मनिर्देशकेन जन्मादिपदेनैव ग्राह्यत्वात् । न चेत्परमते 'अस्य' इत्यनेन भङ्गं विवक्षित्वाऽ-

स्योत्पत्त्यादिके जन्मादिपदेनोक्ते भङ्गस्य ब्रह्मकारणं सिध्यति, किं 'जन्मादि' इत्यत्र भङ्गग्रहणेनेति स्यात् । नन्वेवमपि चेतनादिसम्बन्धिज्ञानादेर्ब्रह्मकार्यत्वे सिद्धेऽपि ज्ञानादिसम्बन्धिनियमनादेर्ब्रह्म कारणं न सिध्यतीति चेन्न, 'यो यस्य धर्मस्स तदाश्रितः' इत्युक्ते धर्मित्वे सति धर्मस्य रूपादेर्यथा धर्मत्वेन 'यः' इत्यनेन, धर्मितया 'यस्य' इत्यनेन च ग्रहणं, तथा ज्ञानादीनामष्टकान्तर्गतत्वात् 'जन्मादि' इत्यनेन गृहीतानामपि नियम्यत्वादिना रूपेण 'अस्य' इत्यनेनापि ग्रहणात् । अन्यथा तवापि भङ्गसम्बन्धिजन्मादिकारणं ब्रह्म न सिद्ध्येत् । नित्यकर्मणि यस्य पुंसो यावदङ्गोपसंहारे शक्तिस्तत्प्रयोगे तावदङ्गोपेततेव, ब्रह्मण्यपि यस्य वस्तुनः सृष्ट्याद्यष्टके यावत्सम्भवति, तावद्धेतुताऽनुगतैव । यद्यपि चेतनस्थानि सुखदुःखादीनि अचेतनस्थानि वृद्ध्यादीन्यपि सन्ति । तथाऽपि विचारविधायक-नानावाक्यपरामर्शेन स्कान्दे सूत्रकृतैवाष्टकर्तृत्वस्यैव लक्षणत्वेनोक्तत्वादत्रापि तस्यैव विवक्षणीयत्वान्न दोषः । यद्वा सर्वैर्मुमुक्षुभिर्विशिष्याष्टककर्तृत्वस्येवान्य-कर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहादिशब्दार्थः । उक्तं च -

''सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा''।। इति ।।

अथवा विषयोपपादकगुणपूर्तिप्रसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितय-हेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात् तस्य च बन्धकत्वं विनाऽयोगात्, तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनाऽनुपपत्तेस्त्रितयहेतुत्वस्यापि वक्तव्यत्वात् पुनश्च दीपस्तम इव, ज्ञानं बन्धकाज्ञानं स्वभावादेव हन्ति, किमीश्वरेणेति शङ्कायां, दीपज्ञानादिस्वभावोऽपि भगवन्नियत इति वाच्यत्वात् प्रकृतोपयोगितयाऽष्टकोऽक्तिः । यथा च स्रष्टृत्वादावेकैकस्यैव लक्षणत्वोपपत्तावपि त्रितयोक्तिः स्थितिहेतुरन्य इति शङ्कानिरासार्थं वा, अनेकलक्षणसूचनार्थं वा, तथाऽष्टकोक्तिरपि तदर्थमस्तु । न चोपादानत्वाय त्रितयोक्तिः, सृष्टिलयाभ्यामेव तत्सिद्धेः । सम्भवति च गुणपूर्तावनेकोपपादकोपन्यासः । तस्मादष्टकमेव जन्मादिशब्दार्थः ।

ಅನುವಾದ - ಅಜ್ಞಾನವೂ ಸಹ ಬಂಧರೂಪವಲ್ಲ. ಹೊರತು ಬಂಧಕರೂಪವಾಗಿದೆ.

ಶಂಕೆ - ಸೂತ್ರದಲ್ಲಿರುವ 'ಅಸ್ಯ' ಎಂಬ ಪದದಿಂದ ನಿಯಮನ ಜ್ಞಾನ ಮೊದಲಾದವುಗಳನ್ನು ವಿವಕ್ಷಿಸಿ ಅವುಗಳ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನು ಜನ್ಮಾದಿಪದದಿಂದ ಹೇಳಿದಾಗ ಜಗತ್ತಿಗೆ ಬ್ರಹ್ಮನು ಕಾರಣನೆಂದು ಸಿದ್ಧವಾದಂತೆ ನಿಯಮನಾದಿಗಳಿಗೂ ಬ್ರಹ್ಮನು ಕಾರಣನೆಂದು ಸಿದ್ಧನಾಗುತ್ತಾನೆ. ಹಾಗಾಗಿ 'ಜನ್ಮಾದಿ' ಎಂಬ ಶಬ್ದದಿಂದಲೇ ನಿಯಮನಾದಿಗಳನ್ನು ಏಕೆ ಸ್ವೀಕರಿಸಬೇಕು?

ಸಮಾಧಾನ - 'ಅಸ್ಯ' ಎಂಬ ಪದದಿಂದ 'ಧರ್ಮಿ'ಯಾದ ಜಗತ್ತನ್ನಷ್ಟೇ ವಿವಕ್ಷಿಸಬೇಕು. ನಿಯಮನಾದಿಗಳು ಧರ್ಮವಾದ್ದರಿಂದ ಧರ್ಮನಿರ್ದೇಶಕವಾದ ಜನ್ಮಾದಿಪದದಿಂದಲೇ ಸ್ವೀಕರಿಸ-ಬೇಕು.

ಜಿಜ್ಞಾಸೆ - 'ಅಸ್ಯ' ಪದಕ್ಕೆ ಜಗತ್ತಿಗೆ ಎಂದರ್ಥ. ಇದರಂತೆ 'ನಿಯಮನ, ಜ್ಞಾನ, ಇವುಗಳಿಗೆ' ಎಂದೂ ಅರ್ಥೈಸೋಣ. ಏನು ತಪ್ಪು? ಜಗತ್ತಿನ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನು ಜನ್ಮಾದಿಪದ ಹೇಳುತ್ತಿದೆ. ಅದರಂತೆ ನಿಯಮನಾದಿಗಳ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನೂ ಜನ್ಮಾದಿಪದವೇ ಹೇಳಲಿ. ಆವಾಗ ಜಗತ್ಕಾರಣತ್ವ ಸಿದ್ಧಿಸಿದಂತೆ, ಅದೇ ಬ್ರಹ್ಮನಿಗೆ ನಿಯಮನಾದಿಕಾರಣತ್ವವೂ ಸಿದ್ಧಿಸುತ್ತದೆ. ಜನ್ಮಾದಿಪದದಿಂದ ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯಗಳನ್ನು ಹೇಳಿರಿ. ಉಳಿದವುಗಳನ್ನು ಅಸ್ಯ ಪದದಿಂದ ಹೇಳಿರಿ, ಉದ್ದೇಶವಂತೂ ಸಿದ್ಧವಾಗುತ್ತದೆ. ಜನ್ಮಾದಿಪದದಿಂದಲೇ ಎಲ್ಲವನ್ನೂ ಹೇಳಬೇಕೆಂಬ ಬಲವಂತವೇಕೆ?

ಉತ್ತರ :- ಲಾಘವದ ಆಸೆಗಾಗಿ ಅನರ್ಥ ಮಾಡಬಾರದು. 'ಇದಂ' ಶಬ್ದ ಷಷ್ಠಿವಿಭಕ್ತಿಯಲ್ಲಿ 'ಅಸ್ಯ' ಎಂದಾಗುತ್ತದೆ. ಧರ್ಮಿಯನ್ನಷ್ಟೇ ಹೇಳುವ ಸ್ವಭಾವ ಇದರದ್ದು. ಜನ್ಮವು ಧರ್ಮವಾಗಿದೆ. ಆದ್ದರಿಂದಲೇ 'ಜನ್ಮಾದಿ' ಪದವು ಧರ್ಮವಾಚಕ. ಧರ್ಮಿಯನ್ನು 'ಅಸ್ಯ' ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿಸಬೇಕು. ಧರ್ಮಗಳನ್ನು 'ಜನ್ಮಾದಿ' ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿಸಬೇಕು. ವಿಪರೀತವಾದಲ್ಲಿ ಧರ್ಮ-ಧರ್ಮಿವ್ಯವಸ್ಥೆಯೇ ಹಾಳಾದೀತು. ಪ್ರಕೃತ ಜಗತ್ತು ಧರ್ಮಿಯಾಗಿದೆ. ಇದನ್ನು 'ಅಸ್ಯ' ಪದದ ಅರ್ಥವೆನ್ನಬೇಕು. ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ನಿಯಮನ, ಜ್ಞಾನ, ಅಜ್ಞಾನ, ಬಂಧ, ಮೋಕ್ಷ ಇವು ಜಗತ್ತಿನ ಧರ್ಮಗಳು. ಇವುಗಳನ್ನು ಜನ್ಮಾದಿಪದಾರ್ಥವೆನ್ನಬೇಕು.

'ಈ ವ್ಯವಸ್ಥೆಯನ್ನು ಒಪ್ಪಲಾರೆ' ಎಂದರೆ ನಿನಗೂ ದೋಷ ತಪ್ಪಿದ್ದಲ್ಲ. ಸಂಹಾರವನ್ನು ಜನ್ಮಾದಿಪದಾರ್ಥವೆಂದು ಏಕೆ ಹೇಳುತ್ತಿ? ಅಸ್ಯ ಪದದ ಅರ್ಥವೆಂದೇ ಹೇಳು. ಆ ಸಂಹಾರದ ಉತ್ಪತ್ತಿ ಸ್ಥಿತಿಯನ್ನು ಜನ್ಮಾದಿಪದ ಹೇಳುತ್ತದೆ. ಹೀಗೆ ಹೇಳಿದಾಗಲೂ ಸಂಹಾರಕಾರಣತ್ವವೂ ಸಿದ್ಧವಾಗುವಾಗ 'ಜನ್ಮಾದಿ' ಎಂಬಲ್ಲಿ ಸಂಹಾರವನ್ನೇಕೆ ಸೇರಿಸಬೇಕು? ಹೀಗೆ ನಿನಗೂ ಸಮಾನ ಆಕ್ಷೇಪವೇ ಇದೆ.

ಆಕ್ಷೇಪ - ಜನ್ಮಾದಿ ಪದದಿಂದ ಎಂಟನ್ನು ಹೇಳಿರಿ. ಆದರೂ ಆಕ್ಷೇಪ ತಪ್ಪಿದ್ದಲ್ಲ. ಅಸ್ಯ = ಚೇತನ ಅಚೇತನರೂಪವಾದ ಪ್ರಪಂಚದ, ಜನ್ಮಾದಿ =ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ನಿಯಮನ, ಜ್ಞಾನ, ಅಜ್ಞಾನ,

स्योत्पत्त्यादिके जन्मादिपदेनोक्ते भङ्गस्य ब्रह्मकारणं सिध्यति, किं 'जन्मादि' इत्यत्र भङ्गग्रहणेनेति स्यात् । नन्वेवमपि चेतनादिसम्बन्धिज्ञानादेर्ब्रह्मकार्यत्वे सिद्धेऽपि ज्ञानादिसम्बन्धिनियमनादेर्ब्रह्म कारणं न सिध्यतीति चेन्न, 'यो यस्य धर्मस्स तदाश्रितः' इत्युक्ते धर्मित्वे सति धर्मस्य रूपादेर्यथा धर्मत्वेन 'यः' इत्यनेन, धर्मितया 'यस्य' इत्यनेन च ग्रहणं, तथा ज्ञानादीनामष्टकान्तर्गतत्वात् 'जन्मादि' इत्यनेन गृहीतानामपि नियम्यत्वादिना रूपेण 'अस्य' इत्यनेनापि ग्रहणात् । अन्यथा तवापि भङ्गसम्बन्धिजन्मादिकारणं ब्रह्म न सिद्ध्येत् । नित्यकर्मणि यस्य पुंसो यावदङ्गोपसंहारे शक्तिस्तत्प्रयोगे तावदङ्गोपेततेव, ब्रह्मण्यपि यस्य वस्तुनः सृष्ट्याद्यष्टके यावत्सम्भवति, तावद्धेतुताऽनुगतैव । यद्यपि चेतनस्थानि सुखदुःखादीनि अचेतनस्थानि वृद्ध्यादीन्यपि सन्ति । तथाऽपि विचारविधायक-नानावाक्यपरामर्शेन स्कान्दे सूत्रकृतैवाष्टकर्तृत्वस्यैव लक्षणत्वेनोक्तत्वादत्रापि तस्यैव विवक्षणीयत्वान्न दोषः । यद्वा सर्वैर्मुमुक्षुभिर्विशिष्याष्टककर्तृत्वस्येवान्य-कर्तृत्वस्य ज्ञेयत्वनियमाभावान्नान्यदिहादिशब्दार्थः । उक्तं च -

''सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा''।। इति ।।

अथवा विषयोपपादकगुणपूर्तिप्रसिद्धये जीवाद्भेदके प्रसिद्धे जन्मादित्रितय-हेतुत्वेऽभिहितेऽपि प्रयोजनसिद्धये मोक्षदत्वस्यापि वक्तव्यत्वात् तस्य च बन्धकत्वं विनाऽयोगात्, तयोश्च तद्धेतुज्ञानाज्ञानदत्वं विनाऽनुपपत्तेस्त्रितयहेतुत्वस्यापि वक्तव्यत्वात् पुनश्च दीपस्तम इव, ज्ञानं बन्धकाज्ञानं स्वभावादेव हन्ति, किमीश्वरेणेति शङ्कायां, दीपज्ञानादिस्वभावोऽपि भगवन्नियत इति वाच्यत्वात् प्रकृतोपयोगितयाऽष्टकोऽक्तिः । यथा च स्रष्टृत्वादावेकैकस्यैव लक्षणत्वोपपत्तावपि त्रितयोक्तिः स्थितिहेतुरन्य इति शङ्कानिरासार्थं वा, अनेकलक्षणसूचनार्थं वा, तथाऽष्टकोक्तिरपि तदर्थमस्तु । न चोपादानत्वाय त्रितयोक्तिः, सृष्टिलयाभ्यामेव तत्सिद्धेः । सम्भवति च गुणपूर्तावनेकोपपादकोपन्यासः । तस्मादष्टकमेव जन्मादिशब्दार्थः ।

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ಅನುವಾದ - ಅಜ್ಞಾನವೂ ಸಹ ಬಂಧರೂಪವಲ್ಲ. ಹೊರತು ಬಂಧಕರೂಪವಾಗಿದೆ.

ಶಂಕೆ - ಸೂತ್ರದಲ್ಲಿರುವ 'ಅಸ್ಯ' ಎಂಬ ಪದದಿಂದ ನಿಯಮನ ಜ್ಞಾನ ಮೊದಲಾದವುಗಳನ್ನು ವಿವಕ್ಷಿಸಿ ಅವುಗಳ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನು ಜನ್ಮಾದಿಪದದಿಂದ ಹೇಳಿದಾಗ ಜಗತ್ತಿಗೆ ಬ್ರಹ್ಮನು ಕಾರಣನೆಂದು ಸಿದ್ಧವಾದಂತೆ ನಿಯಮನಾದಿಗಳಿಗೂ ಬ್ರಹ್ಮನು ಕಾರಣನೆಂದು ಸಿದ್ಧನಾಗುತ್ತಾನೆ. ಹಾಗಾಗಿ 'ಜನ್ಮಾದಿ' ಎಂಬ ಶಬ್ದದಿಂದಲೇ ನಿಯಮನಾದಿಗಳನ್ನು ಏಕೆ ಸ್ವೀಕರಿಸಬೇಕು?

ಸಮಾಧಾನ - 'ಅಸ್ಯ' ಎಂಬ ಪದದಿಂದ 'ಧರ್ಮಿ'ಯಾದ ಜಗತ್ತನ್ನಷ್ಟೇ ವಿವಕ್ಷಿಸಬೇಕು. ನಿಯಮನಾದಿಗಳು ಧರ್ಮವಾದ್ದರಿಂದ ಧರ್ಮನಿರ್ದೇಶಕವಾದ ಜನ್ಮಾದಿಪದದಿಂದಲೇ ಸ್ವೀಕರಿಸ-ಬೇಕು.

ಜಿಜ್ಞಾಸೆ - 'ಅಸ್ಯ' ಪದಕ್ಕೆ ಜಗತ್ತಿಗೆ ಎಂದರ್ಥ. ಇದರಂತೆ 'ನಿಯಮನ, ಜ್ಞಾನ, ಇವುಗಳಿಗೆ' ಎಂದೂ ಅರ್ಥೈಸೋಣ. ಏನು ತಪ್ಪು? ಜಗತ್ತಿನ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನು ಜನ್ಮಾದಿಪದ ಹೇಳುತ್ತಿದೆ. ಅದರಂತೆ ನಿಯಮನಾದಿಗಳ ಉತ್ಪತ್ತ್ಯಾದಿಗಳನ್ನೂ ಜನ್ಮಾದಿಪದವೇ ಹೇಳಲಿ. ಆವಾಗ ಜಗತ್ಕಾರಣತ್ವ ಸಿದ್ಧಿಸಿದಂತೆ, ಅದೇ ಬ್ರಹ್ಮನಿಗೆ ನಿಯಮನಾದಿಕಾರಣತ್ವವೂ ಸಿದ್ಧಿಸುತ್ತದೆ. ಜನ್ಮಾದಿಪದದಿಂದ ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯಗಳನ್ನು ಹೇಳಿರಿ. ಉಳಿದವುಗಳನ್ನು ಅಸ್ಯ ಪದದಿಂದ ಹೇಳಿರಿ, ಉದ್ದೇಶವಂತೂ ಸಿದ್ಧವಾಗುತ್ತದೆ. ಜನ್ಮಾದಿಪದದಿಂದಲೇ ಎಲ್ಲವನ್ನೂ ಹೇಳಬೇಕೆಂಬ ಬಲವಂತವೇಕೆ?

ಉತ್ತರ :- ಲಾಘವದ ಆಸೆಗಾಗಿ ಅನರ್ಥ ಮಾಡಬಾರದು. 'ಇದಂ' ಶಬ್ದ ಷಷ್ಠಿವಿಭಕ್ತಿಯಲ್ಲಿ 'ಅಸ್ಯ' ಎಂದಾಗುತ್ತದೆ. ಧರ್ಮಿಯನ್ನಷ್ಟೇ ಹೇಳುವ ಸ್ವಭಾವ ಇದರದ್ದು. ಜನ್ಮವು ಧರ್ಮವಾಗಿದೆ. ಆದ್ದರಿಂದಲೇ 'ಜನ್ಮಾದಿ' ಪದವು ಧರ್ಮವಾಚಕ. ಧರ್ಮಿಯನ್ನು 'ಅಸ್ಯ' ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿಸಬೇಕು. ಧರ್ಮಗಳನ್ನು 'ಜನ್ಮಾದಿ' ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿಸಬೇಕು. ವಿಪರೀತವಾದಲ್ಲಿ ಧರ್ಮ-ಧರ್ಮಿವ್ಯವಸ್ಥೆಯೇ ಹಾಳಾದೀತು. ಪ್ರಕೃತ ಜಗತ್ತು ಧರ್ಮಿಯಾಗಿದೆ. ಇದನ್ನು 'ಅಸ್ಯ' ಪದದ ಅರ್ಥವೆನ್ನಬೇಕು. ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ನಿಯಮನ, ಜ್ಞಾನ, ಅಜ್ಞಾನ, ಬಂಧ, ಮೋಕ್ಷ ಇವು ಜಗತ್ತಿನ ಧರ್ಮಗಳು. ಇವುಗಳನ್ನು ಜನ್ಮಾದಿಪದಾರ್ಥವೆನ್ನಬೇಕು.

'ಈ ವ್ಯವಸ್ಥೆಯನ್ನು ಒಪ್ಪಲಾರೆ' ಎಂದರೆ ನಿನಗೂ ದೋಷ ತಪ್ಪಿದ್ದಲ್ಲ. ಸಂಹಾರವನ್ನು ಜನ್ಮಾದಿಪದಾರ್ಥವೆಂದು ಏಕೆ ಹೇಳುತ್ತಿ? ಅಸ್ಯ ಪದದ ಅರ್ಥವೆಂದೇ ಹೇಳು. ಆ ಸಂಹಾರದ ಉತ್ಪತ್ತಿ ಸ್ಥಿತಿಯನ್ನು ಜನ್ಮಾದಿಪದ ಹೇಳುತ್ತದೆ. ಹೀಗೆ ಹೇಳಿದಾಗಲೂ ಸಂಹಾರಕಾರಣತ್ವವೂ ಸಿದ್ಧವಾಗುವಾಗ 'ಜನ್ಮಾದಿ' ಎಂಬಲ್ಲಿ ಸಂಹಾರವನ್ನೇಕೆ ಸೇರಿಸಬೇಕು? ಹೀಗೆ ನಿನಗೂ ಸಮಾನ ಆಕ್ಷೇಪವೇ ಇದೆ.

ಆಕ್ಷೇಪ - ಜನ್ಮಾದಿ ಪದದಿಂದ ಎಂಟನ್ನು ಹೇಳಿರಿ. ಆದರೂ ಆಕ್ಷೇಪ ತಪ್ಪಿದ್ದಲ್ಲ. ಅಸ್ಯ = ಚೇತನ ಅಚೇತನರೂಪವಾದ ಪ್ರಪಂಚದ, ಜನ್ಮಾದಿ =ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ನಿಯಮನ, ಜ್ಞಾನ, ಅಜ್ಞಾನ,

ಬಂಧ, ಮೋಕ್ಷಗಳು, ಎಂದಾಗ ಇವುಗಳಲ್ಲಿ ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯಗಳು, ಚೇತನಾಚೇತನಾತ್ಮಕ ಸಮಸ್ತಪ್ರಪಂಚಸಾಧಾರಣವಾಗಿವೆ. ಜ್ಞಾನಾಜ್ಞಾನಬಂಧಮೋಕ್ಷಗಳು ಚೇತನ ಮಾತ್ರ ಸಾಧಾರಣವಾಗಿವೆ. ಇವುಗಳಿಗೆಲ್ಲ ಬ್ರಹ್ಮಕಾರಣತ್ವವು ಸಿದ್ಧವಾಗಿದೆ. ಆದರೆ ನಿಯಮನಾದಿಗಳು ಚೇತನಾಚೇತನ-ಸಾಧಾರಣವಾಗಿವೆ. ಅದರಂತೆ ಜ್ಞಾನಾಜ್ಞಾನಾದಿಸಾಧಾರಣವೂ ಆಗಿವೆ. ಇಂತಹ ನಿಯಮನಕ್ಕೆ ಬ್ರಹ್ಮ-ಕಾರಣತ್ವವಾದರೂ ಹೇಗೆ ಸಿದ್ಧವಾಗಲು ಸಾಧ್ಯ?

ಸಮಾಧಾನ - ಆ ಸಂದರ್ಭದಲ್ಲಿ ಜ್ಞಾನಾದಿಗಳನ್ನು ಧರ್ಮಿಯನ್ನಾಗಿಸಿ 'ಅಸ್ಯ' ಪದದಿಂದಲೂ ವಿವಕ್ಷಿಸುತ್ತೇವೆ. 'ಯೋ ಯಸ್ಯ ಧರ್ಮಃ ಸಃ ತದಾಶ್ರಿತಃ' ಎಂಬ ನಿಯಮವು ಪ್ರಸಿದ್ಧವಾಗಿದೆ. ರೂಪವು ರೂಪತ್ವಕ್ಕೆ ಧರ್ಮಿಯಾಗಿದೆ. ಘಟಕ್ಕೆ ಧರ್ಮವಾಗಿದೆ. ಹೀಗೆ ವಿವಕ್ಷಾಭೇದದಿಂದ ಒಂದೇ ವಸ್ತುವು ಧರ್ಮವೂ ಧರ್ಮಿಯೂ ಆಗುವುದು ಕಂಡಿದೆ, ಅದರಂತೆ ಪ್ರಕೃತ ಜ್ಞಾನಾದಿಗಳು ಎಂಟರಲ್ಲಿ ಧರ್ಮರೂಪದಿಂದ ಸೇರಿವೆ. ಅದೇ ಜ್ಞಾನಾದಿಗಳೇ ಧರ್ಮಿರೂಪದಿಂದ ಅಸ್ಯ ಪದಾರ್ಥದಲ್ಲಿಯೂ ಸೇರುತ್ತವೆ. ಅಸ್ಯ ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿದಾಗ ಅವುಗಳ ನಿಯಮನಕ್ಕೆ ಬ್ರಹ್ಮಕಾರಣತ್ವ ಸುಲಭವಾಗಿ ಸಿದ್ಧವಾಗುತ್ತದೆ. ಯಾವ ಆಕ್ಷೇಪಕ್ಕೂ ಅವಕಾಶವಿಲ್ಲ.

ಹೀಗೆ ಒಪ್ಪದಿದ್ದರೆ ನಿನಗೂ ದೋಷವಿದೆ. ನಮ್ಮಂತೆ ಭಂಗವನ್ನು ನೀನು ಭಂಗಕ್ಕೆ ಉತ್ಪತ್ತಿಯಿರುವುದರಿಂದ 'ಅಸ್ಯ' ಪದಾರ್ಥದಲ್ಲಿ ಸೇರಿಸಬೇಕು. ಇಲ್ಲವಾದಲ್ಲಿ ಭಂಗಸಂಬಂಧಿಯಾದ ಜನ್ಮಕ್ಕೆ ಬ್ರಹ್ಮಕಾರಣತ್ವವು ಸಿದ್ಧಿಸದಿರಬೇಕಾದೀತು.

ಆಕ್ಷೇಪ - ಸೃಷ್ಟ್ಯಾದ್ಯಷ್ಟಕಗಳು ಸಮಸ್ತ ಜಗತ್ತಿನಲ್ಲಿ ಅನುಗತವಾಗಿ ಇರಲಾರದು. ಅನುಗತವಾದ ಜನ್ಮ ಸ್ಥಿತಿ, ಲಯಗಳನ್ನು ಮಾತ್ರ ಜನ್ಮಾದಿಪದದಿಂದ ಹೇಳಬೇಕು.

ಸಮಾಧಾನ - ಎಲ್ಲವೂ ಎಲ್ಲೆಡೆ ಇರಬೇಕಾಗಿಲ್ಲ. ಯಾವ ವಸ್ತುಗಳಲ್ಲಿ ಯಾವ ಯಾವ ಗುಣಗಳು ಇರಬೇಕೋ, ಆಯಾ ವಸ್ತುಗಳಲ್ಲಿ ಆಯಾ ಗುಣಗಳು ಇದ್ದರೆ ಸಾಕು. ಪೂರ್ವಮೀಮಾಂಸೆಯ ಯಥಾಶಕ್ತ್ಯಂಗನುಷ್ಠಾನಪ್ರಕರಣದಲ್ಲಿ ಈ ವಿಷಯವನ್ನು ನಿರ್ಣಯಿಸಿದ್ದಾರೆ. - ಜೀವನಪರ್ಯಂತ ನಿತ್ಯಕರ್ಮ (ಅಗ್ನಿಹೋತ್ರ)ವನ್ನು ಆಚರಿಸಬೇಕು. ಸಮಸ್ತಯಜ್ಞಾಂಗಗಳ ಸಂಪಾದನೆಯು ಅಶಕ್ಯ-ವಾದರೂ ದೋಷವಿಲ್ಲ. ಯಥಾಶಕ್ತಿ ಅಂಗಗಳನ್ನು ಸಂಪಾದಿಸಬೇಕು. ಅಷ್ಟರಿಂದಲೇ ಪ್ರಧಾನಕಾರ್ಯವನ್ನು ಮುಗಿಸಬೇಕೆಂದು ಹೇಳಿದೆ. ಅದರಂತೆ ಪ್ರಕೃತ ಎಲ್ಲಾ ವಸ್ತುಗಳಲ್ಲಿ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳು ಬರಲಾರವು. ಯಾವ ವಸ್ತುವಿನಲ್ಲಿ ಎಷ್ಟು ಬರುತ್ತವೋ, ಅಷ್ಟಕ್ಕೆ ಮಾತ್ರ ಬ್ರಹ್ಮ-ಕಾರಣತ್ವವನ್ನು ಹೇಳಿದರೆ ಸಾಕು.

ಜಿಜ್ಞಾಸೆ - ಎಂಟೇ ಧರ್ಮಗಳನ್ನು ವಿವಕ್ಷಿಸಲು ಏನು ಕಾರಣ? ಜಗತ್ತಿನಲ್ಲಿ ಇನ್ನೂ ಹಲವು ಧರ್ಮಗಳಿವೆ. ಚೇತನರಲ್ಲಿ ಸುಖ, ದುಃಖ, ಇಚ್ಛಾ, ದ್ವೇಷ, ಮೊದಲಾದವು. ಅಚೇತನಗಳಲ್ಲಿ ವೃದ್ಧಿ, ಪರಿಮಾಣ, ಹ್ರಾಸ ಮೊದಲಾದವು. ಹೀಗೆ ಹಲವಾರು ಧರ್ಮಗಳು ಇರಬೇಕಾದರೆ ಇವುಗಳನ್ನೇಕೆ ವಿವಕ್ಷಿಸಲಿಲ್ಲ?

ಉತ್ತರ - ಈ ಜಿಜ್ಞಾಸೆಗೆ ಮೂರು ಬಗೆಯಲ್ಲಿ ಉತ್ತರ ತಿಳಿಯಬೇಕು.

೧) ವಿಚಾರ ವಿಧಾಯಕವಾದ ಸಮಸ್ತ ವಾಕ್ಯಗಳಲ್ಲಿ ಎಂಟು ಧರ್ಮಗಳು ಹೇಳಲ್ಪಟ್ಟವೆ. ಅದನ್ನು ಸೂತ್ರಕಾರರೇ ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಸೂತ್ರಕಾರರಿಗೆ ಸಮ್ಮತವಾದ ಅಷ್ಟಕರ್ತೃತ್ವವನ್ನೇ ಜನ್ಮಾದಿಪದದಿಂದ ವಿವಕ್ಷಿಸಿದ್ದೇವೆ.

೨) ಮೋಕ್ಷ ಬಯಸುವರು ಬ್ರಹ್ಮನನ್ನು ಹೇಗೆ ತಿಳಿಯಬೇಕು? ಇದು ಎಲ್ಲರ ಜಿಜ್ಞಾಸೆ. 'ಅಷ್ಟಕರ್ತಾ' ಎಂದೇ ಬ್ರಹ್ಮನನ್ನು ತಿಳಿಯಬೇಕು. ಇಂತಹ ತಿಳುವಳಿಕೆ ಅತ್ಯಾವಶ್ಯಕ ಮತ್ತು ಅನಿವಾರ್ಯ. ಆದರೆ ಉಳಿದ ಗುಣಗಳನ್ನು ತಿಳಿಯಲೇಬೇಕೆಂಬ ನಿಯಮವಿಲ್ಲ. ಇದನ್ನು ಆಚಾರ್ಯರೇ ತಾತ್ಪರ್ಯನಿರ್ಣಯದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. 'ಸೃಷ್ಟಿ, ರಕ್ಷಣೆ, ಸಂಹಾರ, ಜ್ಞಾನ, ನಿಯಮನ, ಅಜ್ಞಾನ, ಬಂಧ, ಮೋಕ್ಷ ಇವುಗಳೆಲ್ಲವೂ ವಿಷ್ಣುವಿನಿಂದಲೇ ನಡೆಯುತ್ತವೆ' ಎಂಬ ಜ್ಞಾನ ಸಂಪಾದನೆ ಮಾಡದ ಹೊರತು ಮೋಕ್ಷವಿಲ್ಲ ಎಂದು.

೩) ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯಗಳ ಕಾರಣತ್ವಮಾತ್ರದಿಂದಲೇ ಜೀವಬ್ರಹ್ಮಭೇದವು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಅಂತಹ ವ್ಯಕ್ತಿಯನ್ನು ತಿಳಿಯುವುದರಿಂದ ದೊರೆಯುವ ಪ್ರಯೋಜನಕ್ಕಾಗಿ? ಮೋಕ್ಷಕಾರಣತ್ವವನ್ನು ಹೇಳಬೇಕು. ಮೋಕ್ಷ ಕೊಡಬೇಕಾದರೆ ಅವನೇ ಬಂಧಕನಾಗಿರಬೇಕು. ಹಾಗಾಗಿ ಬಂಧಕಾರಣನೆಂದು ಒಪ್ಪಬೇಕು. ಮೋಕ್ಷಬಂಧಗಳ ಕಾರಣವಾದ ಜ್ಞಾನ ಹಾಗು ಅಜ್ಞಾನ ಇವುಗಳನ್ನೂ ಒಪ್ಪಬೇಕು. ಹೀಗೆ ೧) ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ೨) ಬಂಧ ಮೋಕ್ಷ, ೩) ಜಾನಅಜ್ಞಾನ, ಎಂಬ ಮೂರರ ಸಮುದಾಯವನ್ನು ಒಪ್ಪಿದಂತಾಯಿತು. ಇಷ್ಟೇ ಸಾಕು. ನಿಯಮನ ಬೇಡ. ಏಕೆಂದರೆ ದೀಪವು ಕತ್ತಲೆಯನ್ನು ಸಹಜವಾಗಿಯೇ ನಾಶ ಮಾಡುತ್ತದೆ. ದೀಪಕ್ಕೆ ಯಾರ ಸಹಾಯವೂ ಬೇಡ. ಅದರಂತೆ ಜ್ಞಾನವೂ ಸಹ, ಸಹಜವಾಗಿಯೇ ಅಜ್ಞಾನನಾಶಕವಾಗಿದೆ. ಈಶ್ವರನ ಅಪೇಕ್ಷೆ ಬೇಡ, ಎಂಬ ಶಂಕೆಗೆ ಇಷ್ಟು ಉತ್ತರ - ದೀಪ ಹಾಗು ಜ್ಞಾನಾದಿಗಳ ಸ್ವಭಾವವೂ ಕೂಡ ಈಶ್ವರಾಧೀನವಾಗಿದೆ. ಈಶ್ವರನಿಲ್ಲದೇ ಯಾವ ಕಾರ್ಯವೂ ಸಹಜವಾಗಿ ಆಗದು. ಹೀಗೆ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳು ಪ್ರಕೃತೋಪಯೋಗಿಯಾಗಿವೆ. ಸಂಗತಗಳೂ ಆಗಿವೆ. ಆದ್ದರಿಂದಲೇ ಎಂಟನ್ನೂ ವಿವಕ್ಷಿಸಬೇಕು.

ಎಂಟು ಲಕ್ಷಣ ಹೇಳಲು ಮತ್ತೂ ಒಂದು ಕಾರಣವಿದೆ - ನೀವು ತ್ರಿತಯಕರ್ತೃತ್ವವನ್ನು ಏಕೆ ಹೇಳುತ್ತೀರಿ? ಕೇವಲ ಜನ್ಮಕಾರಣತ್ವವನ್ನು ಹೇಳಿರಿ. ಹಾಗೆ ಹೇಳಿದಲ್ಲಿ ಸ್ಥಿತಿಕಾರಣನು ಬೇರೊಬ್ಬನೆಂಬ ಸಂಶಯ ಬರುತ್ತದೆ. ಅದರ ಪರಿಹಾರಕ್ಕಾಗಿ ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯ, ಕಾರಣನು ಒಬ್ಬನೇ ಎಂದು ತಿಳಿಸುವುದಕ್ಕಾಗಿಯೂ ತ್ರಿತಯಕಾರಣತ್ವವನ್ನು ಹೇಳಿದ್ದೇವೆಂದು ನೀವು ಉತ್ತರಿಸಬೇಕು. ನಾವೂ ಅದೇ ಕಾರಣಕ್ಕೋಸ್ಕರ ಎಂಟು ಲಕ್ಷಣಗಳನ್ನು ಹೇಳಿದ್ದೇವೆಂದು ಉತ್ತರಿಸುತ್ತೇವೆ. ಉಪಾದಾನಕಾರಣತ್ವದ ಸಿದ್ಧಿಗಾಗಿ ಮೂರರ ಕಾರಣತ್ವವು ನಮಗೆ ಅನಿವಾರ್ಯವೆಂದು ಶಂಕಿಸಬಾರದು. ಕೇವಲ ಸೃಷ್ಟಿಲಯ-ಗಳಿಂದಲೇ ಉಪಾದಾನತ್ವವನ್ನು ಉಪಪಾದಿಸಬಹುದು. ಮತ್ತು ಗುಣಪೂರ್ಣತ್ವದ ಸಮರ್ಥನೆ ನಮ್ಮ

ಉದ್ದೇಶ. ಅದರ ಸಮರ್ಥನೆಗೆ ಕೇವಲ ಜನ್ಮಕಾರಣತ್ವ ಹೇಳಿದರೆ ಸಾಲದು. ಸ್ಥಿತಿಕಾರಣತ್ವವೇ ಮೊದಲಾದವುಗಳನ್ನೂ ಹೇಳಬೇಕು. ಆದ್ದರಿಂದ ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳೇ 'ಜನ್ಮಾದಿ' ಪದದ ಅರ್ಥ.

ಕಠಿಣಪದಾರ್ಥ

ತಥಾಪಿ = ಜನ್ಮಾದ್ಯಷ್ಟಕಗಳಿಗೆ ಭೇದವು ಸಿದ್ಧವಾದರೂ. ತಸ್ಯ = ಅಸ್ಯ ಎಂಬುದರಿಂದ ಹೇಳಿದ. ತಯೋಃ = ಬಂದ ಮತ್ತು ಮೋಕ್ಷಗಳ.

**प्रकाशः** – अज्ञानबन्धयोर्भेदमाह –**अज्ञानं त्विति । तथाऽपीति ।** जन्मादीनामष्टानां भेदे सिद्धेऽपीत्यर्थः । यथा 'अस्य' इत्यनेन जगतः परामर्शः, तथा पञ्चधर्मानपि परामृश्यास्य जन्मादित्रयं भवतीत्युक्ते जगत्कारणं ब्रह्म यथा सिध्यति, तथा नित्यादिकारणं सिध्यतीत्यर्थः । **अस्येत्यनेनेति** । अत्र 'अस्य' इति धर्मिनिर्देशकं, 'जन्मादि' इति धर्मनिर्देशकम् । तत्र नियमनादीनां धर्माणां धर्मिनिर्देशकेनैव ग्रहणे जन्मादित्रयसम्बन्धो जगतो नियमनादीनां च सिध्यति, तथाऽपि जगतो नियमनादिधर्माणां च सम्बन्धो नोक्तस्स्यात् । अतो धर्मनिर्देशकेन तेषां ग्रहणे तु जगत्सम्बन्धो जन्मादित्रयस्येव नियत्यादीनामपि सिध्यतीत्येवं ग्राह्यमित्यर्थः । **अस्येति** । 'अस्य' इत्युक्तस्येत्यर्थः । स्थितावप्ययं प्रसङ्गो बोध्यः । भङ्गमात्रे तदुक्तिस्तु सौत्रादिपदेन स्थितेरवश्यं ग्राह्यत्वाद्यथान्यासमुपेत्य । वस्तुतस्तु – 'जन्मास्य यतः' इति सूत्रन्यासे लाघवमिष्टसिद्धिश्चेतीदमेवादिपदोच्चारणं ज्ञापकं, धर्मिनिर्देशकेन 'अस्य' इत्यनेन नियत्यादिधर्माणामग्रहण इति, यथोक्त एवार्थः सूत्रकृदभिमत इति ध्येयम् । ननु जन्मादित्रयस्य कृत्स्नजगत्सम्बन्धाद् धर्मनिर्देशकेनैतस्यैव ग्रहणं युक्तं, न तु ज्ञानादीनां, तेषां चेतनमात्रसम्बन्धित्वादिति चेत्तत्सम्बन्धार्थमपि 'जन्मादि' इत्यनेनैव ग्राह्यत्वात् । तन्मतेऽप्यनादिजीवब्रह्म-विभागादौ जन्मादेरयोगात्, 'अस्य' इत्यनेन जन्ममात्रविवक्षायां कृत्स्नस्थिति-कारणत्वासिद्धेः, सर्वनाम्नस्सङ्कोचापत्तेश्चेति भावः । 'जन्मादि' इत्यनेन सर्वधर्माणां ग्रहणमित्यत्रापि बाधकमाशङ्कते – **नन्वेवमिति** । नियत्यादीनां जगत्सम्बन्ध-लाभेऽपीत्यर्थः । ज्ञानादिचतुर्णां च नियमेन जन्मादिसंबन्धाबोधनादिति भावः । **रूपादेरिति** । रूपत्वादिकं प्रति धर्मी रूपरसादिः घटादिकं प्रति धर्मश्चेत्यर्थः। उक्तरीतिस्त्वयाऽपि वाच्येत्याह – **अन्यथेति** ।।

ननु जन्मादित्रयमात्रविवक्षायां विश्वसंबन्धिजन्मादिहेतुत्वं एकमनुगतं लभ्यते । अन्यथा कचिज्जन्मादिहेतुत्वं, कचिज्ज्ञानादिहेतुत्वं, इत्यननुगतं स्यादित्यत आह – **नित्येति** । षष्ठे तृतीयपादे ''सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात्'' इत्याद्याधिकरणे ''यावज्जीवमग्निहोत्रं जुहोति'' ''यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'' इत्यादौ किं सर्वाङ्गोपसंहारशक्तानामेवाधिकारः, उत यस्तु यावन्ति शक्नोत्युपसंहर्तुं तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति सन्देहे, अग्निहोत्रेण भावयेदित्युक्ते, कथं भावयेदिति कथंभावाकांक्षायां, सर्वाङ्गानां समुच्चयेन ग्रहणात्, सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वेन नाङ्गहीनस्य तत्राधिकार इति प्राप्ते, यावच्छब्दोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तराभावान्निमित्तत्वेन यागानुरक्तां भावनां प्रत्यवगम्यते । निमित्तस्य चैतद्रूपं, यत्तस्मिन् सति नैमित्तिकमवश्यं कार्यमिति । अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकत्वानुरोधेन यथासम्भवमङ्गानि गृह्णाति, तावतैव शास्त्रवशात् फलसिद्धिरिति, यथाशक्ति प्रयोगेणैवाधिकार इति सिद्धान्तितम् । तथा च तत्र यथा, यत्र यावच्छक्यं, तत्र तावन्मात्राङ्गोपेतता, तथाऽत्रापीत्यर्थः । यद्येवमनुगमस्तर्हि 'जन्मादि' इत्यत्राष्टकग्रहणमिवान्येषां चेतनधर्माणां सुखदुःखेच्छाद्वेषादीनामचेतनधर्माणां वृद्धिपरिमाणापक्षयादीनां विवक्षायामप्युक्तदिशाऽनुगमसम्भवात् कुतो न ग्रहणमित्याशङ्क्य, त्रेधा समाधिमाह – **यद्यपीत्यादिना अष्टकोक्तिरित्यन्तेन** । सुखादीनामन्तःकरणधर्मत्वेऽपि 'धनी' इतिवत्स्वामित्वात् 'चेतनस्थानि' इत्युक्तम् । सूत्रकृतोऽपि निमित्तोक्तिः – **विचारविधायकेति** । यद्यप्यन्वेषणादिवाक्येष्वपहतपाप्मत्वसत्यकामत्वादिधर्माः श्रुताः । तथाऽपि तेषां ब्रह्मपदोक्तगुणग्रहणेन गृहीतेस्तदुपपादकत्वमष्टानामेवेत्युक्तिरिति ध्येयम् । अवश्यज्ञेयत्वान्मोक्षशास्त्रे एतदेव विवक्षितं, नान्यदित्याह – **यद्वेति** । **उक्तं चेति** । तात्पर्यनिर्णयाद्याध्याय इत्यर्थः । ल्युटष्टित्करणेन त्रिलिङ्गत्वस्य ज्ञापितत्वात् 'बन्धनान्' इति साधु । अष्टानामेव प्रकृतोपयोगादन्येषां तदभावादग्रहणमिति भावेनाह – **अथ वेति** । **अयोगादिति** । अन्यबद्धत्वादेर्निरासादिति भावः । 'तयोः' मोक्षबन्धदत्वयोः – **त्रितयेति** । बन्धज्ञानाज्ञानत्रितयेत्यर्थः । यद्वोक्तदिशा जन्मस्थितिभङ्गानां बन्धमोक्षयोर्ज्ञाना-

ज्ञानयोश्चैकैकसमुदायत्वं विवक्षित्वा 'त्रितयहेतुत्वस्यापि' इत्युपसंहारः । नियते-रुपयोगमाह – **पुनश्चेति** । अत्राद्यः परिहारो भाष्योक्तस्कान्दस्मृत्या सूचितः । द्वितीयस्तु 'सृष्टिरक्षा' इति स्मृत्या । तृतीयस्तु –

यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव वः । इत्यनेन,
नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना ।
ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित् ।।

इत्यादिना चानुव्याख्यानेन सूचित इत्याहुः । नन्वेकलक्षणोक्तावपीष्टसिद्धे-र्नानेकोक्तिरर्थवतीत्यत आह – **यथा चेति** । परमत इति भावः । **सम्भवति चेति** । जन्ममात्रोक्तौ जगज्जन्मोपयुक्तानां केषांचिद्गुणानां लाभेऽपि स्थित्युपयुक्तगुणालाभात् साऽपि ग्राह्या । तथा संहर्तृत्वमोचकत्वादिप्रयोजकधर्माणां लाभाय स्रष्टृत्वादीनां स्वस्वप्रयोजकानेकगुणाक्षेपकत्वं तेषां ग्रहण एव सिध्यति, नान्यथा । न हि 'चैत्रो रूपद्रष्टा' इत्युक्ते चक्षुष्मत्तेव श्रोत्रादिमत्ता सिध्यति । तथा च तत्र सर्वेन्द्रिय-वत्त्वप्रतिपादनाय तत्तदाक्षेपकं रूपज्ञानशब्दज्ञानादिकं सर्वमुपपादकमुपादेयं, तद्वत् सर्वगुणपूर्त्यर्थमनेकोपपादकोक्तिर्युक्तेति भावः । एतेन – यदाह कश्चित्, जन्मादि-कारणत्ववद्गुणपूर्तेरपि विष्णौ श्रुतत्वान्न तत्रोपपादकापेक्षा । अन्यथा तत्राप्येव-मित्यनवस्थाऽऽपत्तेर्नेदं सूत्रमारभ्यम् । जन्मादिहेतुत्वस्यापि सत्यकामत्वादिवद्गुणतया ब्रह्मपदोक्तगुणपदेन ग्रहणेन तस्य द्वैरूप्यापाताच्च । किंचोपपाद्योपपादकयोर्द्वयोरपि श्रुत्येकसमधिगम्ययोस्तज्जन्यनिर्णयदशायां नोपपादकापेक्षा, आपातदशायां द्वयोरप्यनिर्णायकत्वं, वैपरीत्यस्य वाऽऽपत्तिरिति, तन्निरस्तम् । ब्रह्मपदश्रुत्या पूर्वं प्रतीतस्य गुणपूर्णत्वस्यासम्भावनयाऽसत्त्वशङ्कायां वाक्यप्रमाणेनानन्तरं धीस्थेन जन्मादिहेतुत्वेनोपपादने दोषाभावात् । अन्यथा मीमांसाऽनारम्भापत्तेः । श्रौते श्रौतस्योपपादकत्वात् । हेतुत्वेन गुणपूर्त्युपपादनस्येव तया तदुपपादनस्य अशक्यशङ्कत्वाच्च । "पराऽस्य शक्तिः" इतिश्रुतौ परत्वस्य स्वाभाविकत्वादिना, "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्" इत्यादिश्रुतौ दृष्टेरभ्रान्तित्व-स्याविनाशित्वेनोपपादनदर्शनाच्च । सामान्याकारेणोपपाद्यकोटिनिविष्टस्यापि स्वाध्यायाध्ययनविध्यादिवद्विशेषाकारेणोपपादकत्वाविरोधाच्च । अस्यां दशायां

तदन्यस्यैव गुणपदेन ग्रहणोपपत्तेश्च । ''कर्तृत्वात्सगुणं ब्रह्म'' इति भागवते सूत्रकृतैव स्पष्टमुपपादकत्वोक्तेश्चेति ।

**गुरुराजीय –** ननु तथाऽप्यज्ञानकारणत्वं न पृथग्वाच्यम् । अज्ञानस्य बन्धरूपत्वेन बन्धकारणत्वोक्त्यैवाज्ञानकारणत्वस्यापि लब्धत्वादित्यत आह – **अज्ञानं त्विति** । यद्यपि सुधायां स्वप्नाधिकरणे अविद्यादेरेव संसारत्वादित्यादिना बन्धत्वमुक्तं तथाप्यत्र दुःखमेव साक्षाद्बंध इत्यभिप्रेत्येदमुक्तम् । ननु तथाऽपि जन्मादीत्यत्रादिपदेन नियमनादिग्रहणमयुक्तम् । न च तथात्वे नियमनादीन् प्रति ब्रह्म कारणं न सिध्येदिति वाच्यम् । अस्येत्यनेनेन नियमनादेरपि परामर्शेन तान्प्रत्यपि ब्रह्मकारणतासिद्धेरित्याशयेन शङ्कते । **ननु तथापीति** । जगतो धर्मित्वान्नियमनादीनां च धर्मत्वाद्धर्मधर्मिणोः सम्बन्धज्ञापनार्थं जन्मादिपदेन तद्ग्रहणमावश्यकमिति परिहरति । **अस्येत्यनेनेति** । **विवक्षे बाधकमाह – न चेदिति** । धर्मत्वेन घटं प्रतीति शेषः । धर्मितया रूपत्वं प्रतीति शेषः । **अस्येत्यनेनेति** । अस्य जगतो जन्मादि यतो भवतीत्युक्तत्वात्तदन्तर्गततया ज्ञानादेर्ग्रहणे तत्सम्बन्धिनियम्यत्वादेरपि तत्कार्यत्वं सिध्यतीति भावः । ननु सृष्ट्याद्यष्टकस्य लक्ष्म्यादावभावेनाष्टककर्तृत्वस्य सर्वसाधारण्याभावात् क्वचित् सृष्टिकर्तृत्वं क्वचिन्मोक्षसाधनत्वमित्यादिकल्पनायामननुगमो दोष इत्यतः 'समासव्यासयोगतः' इत्यत्रोक्तमभ्युपेत्य दृष्टान्तेनोपपादयति । **नित्यकर्मणीति** । नन्वष्टककर्तृत्वमात्राभिधानमयुक्तम् । न च विचारविधायकवाक्योक्तत्वादेषां ग्रहणम् । अन्वेषणवाक्ये सत्यकामत्वादीनामपि विद्यमानत्वेन तेषामपि ग्रहण-प्रसङ्गादित्यपरितोषात् परिहारान्तरमाह – **यद्वेति** । अथवा ननु सूत्रकृतोपि विशिष्याष्टककर्तृत्वस्यैवोक्तौ किं निमित्तमित्यत आह – **यद्वेति** । मुमुक्षुभिः विधीयमानविचाराधिकारादिभिः । विशिष्टाधिकारिणां नियमसत्त्वात्सर्वैरित्युक्तम् । नन्वष्टककर्तृत्वस्येवावतारानवतारपञ्चभेदादेरपि 'अवतारान् हरेर्ज्ञात्वा' इत्यादिना मुमुक्षुभिरवश्यं ज्ञेयत्वस्योक्तत्वात् तदनुक्त्वा प्रकृतेऽष्टककर्तृत्वस्योक्तौ किं निमित्तमित्यस्वरसादाह – **अथवेति** । तथा च प्रकृतोपयुक्तत्वादेषामेव ग्रहणं युक्तमिति भावः । **तयोश्चेति** । **बन्धमोक्षयोरित्यर्थः** । **त्रितयहेतुत्वस्यापीति** । ज्ञानाज्ञानबंधरूपत्रितयहेतुत्वस्यापीत्यर्थः । नन्वत्र स्वारसिक्या आकाङ्क्षाया

अभावादुत्थापिताकाङ्क्षायाश्चातिप्रसङ्गात्राष्टककर्तृत्वस्यावश्यवक्तव्यतेत्याशङ्क्य तथात्वे त्रितयहेतुत्वमपि न वक्तव्यम् । तत्राऽपि स्वारसिक्या आकाङ्क्षाया अभावात् । तदभावेप्युत्थापिताकाङ्क्षया त्रितयहेतुत्वस्यावश्यवक्तव्यत्वे प्रकृतेपि साम्यमित्याह – **यथा चेति** । ननु न स्थितिहेतुरन्य इति शङ्कानिरासाय त्रितयोक्तिरित्युच्यते येन तादृशोत्थापिताकाङ्क्षाया अन्यत्रापि साम्यादष्टकोक्तिरप्यावश्यका स्यात् । किं नामोपादानत्वसिद्ध्यर्थमेव त्रितयोक्तिरित्याशङ्क्ते । **न चोपादानत्वायेति** । **सृष्टिलयाभ्यामेवेति** । तथा च स्थितिकर्तृत्वोक्तेरुपादानार्थत्वाभावेन तत्रोत्थापिताकाङ्क्षाया एव वक्तव्यत्वात्तदंशे साम्यमेवेति भावः । अनेकलक्षणसूचनार्थं वेत्युक्तमुपपादयति । **सम्भवति चेति** । अथवा एवं प्रतिबन्द्या अनेकलक्षणोपपादनमिति प्रतिपादितम् । वास्तवं परिहारं चाह – **सम्भवति चेति** ।

ವಿವರಣೆ - ಅಜ್ಞಾನ ಹಾಗು ಬಂಧವು ಒಂದೇ ಆಗಿರುವುದರಿಂದ ಬಂಧಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾಗಿ ಅಜ್ಞಾನವನ್ನೇಕೆ ಹೇಳಿದ್ದು? ಎಂಬ ಪ್ರಶ್ನೆ ಸರಿಯಲ್ಲ. ಅವುಗಳಿಗೆ ಪರಸ್ಪರ ಭೇದವಿದೆ. ಏಕೆಂದರೆ ಅಜ್ಞಾನವು ಬಂಧರೂಪವಲ್ಲ. ಹೊರತು ಬಂಧಕವಾಗಿದೆ. ಬಂಧಕ್ಕೆ ಕಾರಣವಾದ ಅಜ್ಞಾನವು ಬಂಧರೂಪವಾಗಲಾರದು. ಅಜ್ಞಾನಕಾರ್ಯವಾದ ಬಂಧವು ಅಜ್ಞಾನರೂಪವಾಗಲಾರದು.

ಪ್ರಶ್ನೆ :- ಜನ್ಮಾದಿ ಅಷ್ಟಕಗಳು ಭಿನ್ನ ಭಿನ್ನವಾಗಿವೆಯೆಂದು ಒಪ್ಪಿಕೊಂಡರೂ ಜನ್ಮಾದಿಪದದಿಂದ ನಿಯಮನಾದಿಗಳನ್ನು ವಿವಕ್ಷಿಸಬೇಕಾಗಿಲ್ಲ. 'ಜನ್ಮಾದ್ಯಸ್ಯ' ಎಂಬ ಸೂತ್ರದಲ್ಲಿರುವ 'ಅಸ್ಯ' ಎಂಬ ಪದಕ್ಕೆ ಜಗತ್ತೆಂಬ ಅರ್ಥವನ್ನು ಹೇಗೆ ವಿವಕ್ಷೆ ಮಾಡುತ್ತೀರೋ, ಆದರಂತೆ ನಿಯಮನಾದಿ ಐದು ಧರ್ಮಗಳನ್ನೂ ವಿವಕ್ಷಿಸಲು ಬರುತ್ತದೆ. ಹೀಗೆ ವಿವಕ್ಷಿಸಿದಾಗ ಜನ್ಮ ಸ್ಥಿತಿ, ಲಯಗಳನ್ನು ಜಗತ್ತಿಗೆ ಹೇಳಿದಂತೆ ನಿಯಮನಾದಿಗಳಿಗೂ ಜನ್ಮ ಸ್ಥಿತಿ ಲಯಗಳನ್ನು ಹೇಳಿದಂತೆ ಆಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಜಗತ್ತು ಹಾಗು ನಿಯಮನಾದಿ ಐದರ ಜನ್ಮ ಸ್ಥಿತಿ ಲಯಗಳು ಯಾರಿಂದ ಆಗುತ್ತದೋ, ಅವನನ್ನು ಬ್ರಹ್ಮನೆಂದು ತಿಳಿಯಬೇಕೆಂದು ಅರ್ಥವಾಗುತ್ತದೆ. ಹೀಗೆ ಹೇಳಿದಾಗಲೂ ಜಗತ್ತಿನಂತೆ ನಿಯಮನಾದಿಗಳಿಗೂ ಬ್ರಹ್ಮಕಾರಣತ್ವವು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಜನ್ಮಾದಿ ಎಂಬಲ್ಲಿನ ಆದಿಪದದಿಂದಲೇ ನಿಯಮನಾದಿಗಳನ್ನು ಏಕೆ ವಿವಕ್ಷಿಸಿಕೊಳ್ಳಬೇಕು. ಹಾಗಾಗಿ 'ಜನ್ಮಾದಿ' ಎಂದರೆ ಜನ್ಮ, ಸ್ಥಿತಿ, ಲಯಗಳೆಂದಷ್ಟೇ ಅರ್ಥ ಹೇಳಬೇಕು.

ಸಮಾಧಾನ - 'ಅಸ್ಯ' ಎಂಬ ಪದವು ಧರ್ಮಿನಿರ್ದೇಶಕವಾಗಿದೆ. 'ಜನ್ಮಾದಿ' ಪದವು ಧರ್ಮನಿರ್ದೇಶಕವಾಗಿದೆ. ನಿಯಮನಾದಿಗಳು ಧರ್ಮಗಳಾದ್ದರಿಂದ ಅವುಗಳನ್ನು ಧರ್ಮಿನಿರ್ದೇಶಕವಾದ 'ಅಸ್ಯ' ಎಂಬ ಪದದಿಂದಲೇ ವಿವಕ್ಷಿಸಬೇಕು. ಆವಾಗ ನಿಯಾಮನಾದಿಗಳನ್ನು ಜಗತ್ತಿಗೆ ಸಂಬಂಧಪಟ್ಟವುಗಳೆಂದು ತಿಳಿಯಲು ಸಾಧ್ಯವಿಲ್ಲ. ಏಕೆಂದರೆ ಜಗತ್ತಿನಂತೆ ನಿಯಮನಾದಿಗಳನ್ನು ಧರ್ಮಿಯೆಂದು ಹೇಳಿದಂತಾಯಿತು. ಒಂದು ವೇಳೆ ಧರ್ಮವಾಚಕವಾದ ಜನ್ಮಾದಿಪದದಿಂದ ಸ್ವೀಕರಿಸದಿದ್ದರೆ ಧರ್ಮಿಭೂತವಾದ ಜಗತ್ತಿನ ಧರ್ಮಗಳು ನಿಯಮನಾದಿಗಳೆಂದು ಸಂಬಂಧ ಹೇಳಲು ಅನುಕೂಲವಾಗುತ್ತಿತ್ತು. ಅದಕ್ಕೋಸ್ಕರ

